नन्ववान्तराऽपूर्वैः फलसिद्धेः किमन्तर्गडुना परमाऽपूर्वेण । न च प्रत्ययबलात्तत्प्रत्ययान्न तन्निराकरणम् इति शङ्क्यम् । तस्य प्रत्ययार्थत्वाऽसिद्धेरिति मन्वानं प्रति दृष्टान्तान्तरमाह । यथेति । ६।१२ यागगतस्येत्यनुषङ्गः । एषा भाट्टप्रक्रिया । यजेतेत्युक्ते शब्दभावनाभाव्यत्वेन पुंस्प्रवृत्तिलक्षणा ऽर्थभावना प्रतीयते । सा च भाव्यकरणेतिकर्तव्यतारूपमंशत्रयमपेक्षते । तत्र यद्यप्येकपदोपात्तत्वेन यागस्य भाव्यत्वं प्रतीयते तथापि क्लेशात्मकत्वेन तस्य भाव्यत्वाऽसंभवाद्भिन्नपदोपात्तः स्वर्गो भाव्यत्वेन संबध्यते, यागः करणत्वेन, प्रयाजादिरितिकर्तव्यतात्वेन, यागस्य क्षणभङ्गुरस्य समयान्तरभाविफलसाधनताऽनुपपत्तेः श्रुतकरणत्वनिर्वाहायाऽपूर्वं कल्प्यते यथा तथा श्रुतबन्धध्वंसनिर्वाहार्थं बन्धस्य मिथ्यात्वं कल्पनीयमिति । दृष्टान्तो विषम इति शङ्कते । ननु तत्रेति । स्वर्गाऽपूर्वेति भाट्टमते स्वर्गसिद्ध्यर्थमपूर्वकल्पनं, गुरुमते परमाऽपूर्वसिद्ध्यर्थमिति विभागः । 'सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहती'त्यादिवचनात् सत्यदुरितस्य सेतुदर्शनेन ध्वंसवत् सत्यबन्धस्य ब्रह्मज्ञानान्निवृत्तिसंभवाद् वैषम्यमित्यर्थः ।

साम्येन समाधत्ते । तर्हीहापीति । सेतुसाक्षात्कारमात्रात् ६।१५ दुरितनिवृत्तिर्न स्मृत्यर्थः, सेतुस्थानां म्लेच्छानामपि दुरितनिवृत्त्या ऽक्षयफलभागित्वप्रसक्तेः, किं तु दूरदेशागतच्छत्रपादुकाविधुरत्वस्वकृतोद्घोषणादिनियमकलापयुक्तस्य सेतुदेशप्राप्त्या कल्मषनिवृत्तिः । तस्माद् दृष्टान्तासिद्धेर्बन्धवैतथ्यमास्थेयं ज्ञाननिवर्त्यत्वसिद्धये इति भावः । तार्क्ष्यस्मरणं सत्यं विषं नाशयति यथा, यथा वा विषयदोषदर्शनं सत्यरागस्य निवर्तकं, तद्वत् ज्ञानात्सत्यबन्धध्वंस इति शङ्कां निराकर्तुम् अ-

ज्ञानस्यैवेत्युक्तम् । न तावत्ताक्ष्र्यस्मरणमात्रस्य सत्य[1]विषश-मयितृत्वं किं तु ध्यानमन्त्रप्रयोगादिक्रियायाः । इतरथा अ-तिप्रसक्तेः । न च विषयदोषदर्शनं रागनिवर्तकं रागविरुद्ध-चेतोवृत्त्युदयाद्रागनिवृत्तिरित्यर्थः ।

६।१८ तद्यदीत्यादिग्रन्थं फलितपरतया व्याकरोति । अत इति । सूत्रार्थश्चासौ विचारकर्तव्यता चेति तथा, तस्या उपपत्तिर्या-भ्यां ते सूत्रार्थविचारकर्तव्यतोपपत्तिनी, ते चार्थप्रयोजने चेति तथोक्ते, तयोः साधनायेति विग्रहः । प्रत्यगूब्रह्मैक्यमर्थशब्दार्थः । सूत्रार्थोपपत्त्युपयोगितयेत्यस्याऽयमर्थः । विचारकर्तव्यतारूप-स्य सूत्रार्थस्योपपत्तिर्याभ्यां विषयप्रयोजनाभ्यां ते सूत्रार्थोपप-त्तिनी, तदुपयोगितया बन्धस्याऽविद्यात्मकत्वप्रदर्शनद्वारेणाऽध्या-सो वर्णनीय इति । मिथ्यात्वसूत्रणमङ्गीकृत्य प्रथमप्रतिपादने को हेतुरिति शङ्कते । ननु सूत्रेणेति । विषं भुङ्क्ष्वेत्यादिवा-क्यात्प्रथमप्रतिपन्नस्याप्यनुपादेयत्वं तद्वन्नेत्याह । प्रतिपाद्यमिति । एकेनोभयोरप्रतिपत्तेः कथं चरमेत्युक्तं? तत्राह । आर्थिकेति । प्रयोजनविवक्षया प्रथमप्रतिपादनमित्याह । तत्राहेति । अध्या-सभाष्यस्याऽध्यासबाधः प्रयोजनं, तच्चोपोद्घातो हेतुरिति यो-जना । उपोद्घातप्रतिपादनयोः भेदाभावान्नोपोद्घात इति वि-

६।१८ शेषणं, तत्राह । प्रतिपाद्यमिति । शब्दवर्णनं व्यावर्तयति । अर्थमि-ति । प्रतिज्ञातवर्णनं व्यावर्तयितुमर्थान्तरेति । असंबद्धार्थवर्णन-व्यावृत्त्यर्थं तदर्थमिति । तदुपयोगितयेत्यर्थः । अग्निमानयमिति प्र-तिज्ञाय धूमवत्त्वादित्यर्थान्तरवर्णनं व्यावर्तयितुं प्रतिपाद्यमर्थं बुद्धौ संगृह्येत्युक्तम् । तावत्युक्ते बुद्धौ संगृह्य पश्चात्प्रतिज्ञाय प्र-

---

१ सत्येति नास्ति २ पु° ।

स्वरूपेण संसृष्टरूपेण च मिथ्येत्यर्थः । कथं चन मिथ्येति वा संबन्धश्च शब्दाद्रूपान्तरं च मिथ्येत्यर्थः । गूढाभिसन्धिं विवृणोति । नन्वन्यपरत्वादिति । अन्यपरस्यापि विघ्ननिवर्तकत्वं स्या- ८।५
दित्याह । नेत्याहेति । तस्मात् परमार्थभूतात् वस्तुनो ऽन्यो ऽध्यासाऽभावस्तदन्यस्तत्परादिति टीकार्थः ।

अन्यपरस्य कथमन्यार्थत्वम्? अन्यत्र तथा ऽदृष्टेरित्याशङ्क्याह । अन्यार्थमिति । न चात्र प्रमाणाभावः ।

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।

अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ।

इति स्मरणादित्यर्थः । व्याख्येयत्वस्याऽनुपसंहरणे को हेतुरित्याशङ्क्य हेतूपसंहरणाद्धेतुमदुपसंहरणं विवक्षितमित्याह । व्याख्येयत्वमिति । युष्मदित्यादि कस्मादुपेक्षितं टीकाकृता? तत्राह । अन्यार्थेति । मङ्गलाचरणसमर्थनप्रवृत्तेनेति यावत् । पदद्वयमिति । युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरिति प्रत्यगभिधायकशब्दव्याख्याने ऽपि इतरस्याऽव्याख्यातत्वात्कथं युष्मदित्यादि व्याख्यातमित्युक्तं? तत्राह । अर्थादिति । सर्वोपप्लवरहित इत्युक्त्या तत्प्रतियोगिविषयत्वेनेतरदपि व्याख्यातमित्यर्थः । उत्तरपदे तमःप्रकाशवद्विरुद्धस्वभावयोरिति । यदीदं व्याचिख्याभितं तर्हि विषयविषयिणोरिति कस्मादुपात्त?मिति चेत् । आत्माऽनात्मनोः सहाऽवस्थानस्योपलभ्यमानत्वात्तादात्म्ययोग्यत्वं विरोध इति प्रतिपादयितुम् इति ब्रूमः ।

व्याख्यातमिति । सर्वोपप्लवरहित इत्यत्रेत्यर्थः । आङ्- ८।८
पूर्वाद्नास्यविहरणे वर्तमानाद्ददातेरात्मनेपदं भवतीत्येवमर्थादाङो दो ऽनास्यविहरणइति सूत्रादादत्तइति प्रयोगेण भाव्यमिति

चेन्नैतदस्ति । ङिद्विशिष्टस्याऽऽकारस्य ग्रहणमङिद्विशिष्टादाकारादुत्तरस्य ददातेरात्मनेपदनियमाऽभावज्ञापनाय । अत्र च ङिद्विशिष्टस्याऽऽकारस्याऽग्रहणात् भिक्षामाददातीतिवदाददातीति प्रयोगः साधुरिति द्रष्टव्यम् ।

साङ्गाऽध्ययनानन्तरं श्रोतव्य इत्यादिवाक्यादात्मतत्त्वसाक्षात्काराय विचारकर्तव्यताप्रतिपत्तौ संदेहे च तद्व्युदासार्थमथात इति प्रवृत्तं, तत्राऽयं विचारः कर्तव्य उत नेति,विषयादिसंभवाऽसंभवाभ्यां संदेहे नेति तावत्प्राप्तं, विषयाद्यसंभवात् । न च प्रत्यग्ब्रह्मैक्याऽनर्थनिवृत्त्यादेः शास्त्रात्प्रतिपत्तेरसंभवाऽसिद्ध इति शङ्क्यम् । कर्तृत्वादिबन्धस्य परमार्थत्वेन तदनुपपत्तेः । न च परमार्थत्वमसिद्धमध्यस्तत्वादिति वाच्यम् । पूर्वाऽनुभवसंस्कारसादृश्यविवेकाग्रहरूपाऽध्यासव्यापकाऽभावेनाऽध्यासाऽनुपपत्तेरिति प्रतिपादयितुं युष्मदस्मदित्यादिकमवतारयामास । तत्र परमार्थस्थले ऐक्यतादात्म्याऽभावेन तदनुभवसंस्कारोऽभावं
८।८ दर्शयितुमैक्याऽयोग्यत्वमाह । युष्मदस्मदिति । युष्मच्चास्मच्च युष्मदस्मदी, तावेव प्रत्ययौ गोचरौ चेति युष्मदस्मत्प्रत्ययगोचरौ, तयोरिति विग्रहः । प्रत्ययोत्तरपदयोश्चेति सूत्रेण युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशविधानात्त्वन्मत्प्रत्ययगोचरयोरिति निर्देशेन भवितव्यम्, त्वत्पुत्रो मत्पुत्र इति यथेति चेन्न; नैतदस्ति, त्वमावेकवचनइत्येकवचनाऽधिकारात् युष्मदस्मदोश्चैकार्थवाचित्वस्याऽविवक्षितत्वादस्मदर्थेऽप्यौपाधिकभेदस्य विद्यमानत्वात्त्वमादेशौ न भवत इति द्रष्टव्यम् । पराग्रूपोऽहंकारः युष्मदर्थः, प्रत्यक्चैतन्यमस्मदर्थः, इति स्वभावतो विरोधो दर्शितः । प्रतीतिरूपः प्रत्यक् प्रतीतिविषय इतर इति प्रतीतितो विरोधः । अहंकारादिप्रविलापनेनाहं ब्रह्मेति व्यवह्रियते प्रत्यगद्वैतान-

प्रयोजनवशादतिलङ्घनमित्याह । तत्राहेति । सुखप्रतिपत्तिर्वा
कस्मा?दित्याशङ्क्याह । सुखप्रतिपत्त्यर्थामिति । युष्मदित्यादेरु- ७।११
क्तविधया भाष्यत्वसिद्धौ किं मङ्गलाचरणाऽऽक्षेपसमाधानाभ्या?-
मित्याशङ्क्य तयोरप्यव्याख्येयत्वव्याख्येयत्वयोः पर्यवसानात्ते
उक्ते इत्याह । एवमपीति । मङ्गलाचरणं वा कस्मा?दित्याशङ्क्याह
विघ्नेति । इतोऽपि मङ्गलाचरणं कार्यमित्याह । शिष्टाचारेति । शि-
ष्टाचारो नाऽनुष्ठेयो ऽतिप्रसङ्गादिति शङ्कते । ननु शिष्टाना-
मिति । किं शिष्टानामाचारमात्रस्याऽननुष्ठेयत्वम्, उत तद्विरोधस्य?
तत्राद्यस्त्वङ्गीक्रियते, द्वितीयस्त्वसंगत इत्याह । नेत्याहेति ।
अतिप्रसङ्गस्य कः समाधिरित्याशङ्क्याऽऽचारं विशिनष्टि ।
आचार इति । धर्मबुद्ध्या ऽनुष्ठीयमानस्य शिष्टाचारस्याऽनुसर-
णीयत्वं, निष्ठीवनादेश्चाऽनीदृक्त्वादननुष्ठेयत्वम् । न च तस्य प्रमा-
णत्वाभावः, मूलश्रुतिस्मृत्यनुमापकत्वात् । तथा चोक्तम् 'आचा-
राच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पन'मितीत्युक्तम् । प्रामाण्यप्र-
तिपादनफलमाह । कर्तव्यमिति । मङ्गलाचरणेनापि क्वचिदपरि-
समाप्तिदर्शनात् क्वचिन्मङ्गलाचरणमन्तरेणापि परिसमाप्तिदृष्टे-
स्तदप्रयोजकमिति शङ्कते । ननु प्रयोजनेति । यत्राऽपरिसमाप्तिस्तत्र
प्रतिबन्धबाहुल्यं, यत्र मङ्गलाचरणं विनापि परिसमाप्तिस्तत्र
ग्रन्थाद्बहिर्मङ्गलाचरणं कृतमिति निश्चीयतइत्याशयेनाह । नेत्या-
हेति । मङ्गलाचरणस्यान्यत्र फलवत्त्वे ऽपि नाऽत्राऽनुष्ठेयत्वं,
फलाऽसंभवादिति शङ्कते । नन्वत्रेति । ग्रन्थकरणस्य ख्यात्या- ७।२०
दितुच्छफलकत्वान्न विघ्नसंभव इत्यर्थः । मननं ब्रह्मज्ञानसाधन-
त्वेन प्रसिद्धम् । तथा चैहिकादिसकलभोगव्यावृत्तचेतस्कस्य
ग्रन्थकरणं मननम् । तत्र च विघ्नः संभावित इत्याभिप्रायेणाह ।
नेत्याहेति । प्रवृत्तेर्निश्चयपूर्वकत्वादत्र विघ्नाऽनिश्चयान्न तन्निबर्ह-

णार्था प्रवृत्तिरिति शङ्कते । ननु संभावनेति । कृष्यादाविव संभावनयापि प्रवृत्तिः स्यादित्याशङ्कय दृष्टाऽदृष्टफलत्वेन वैषम्यान्नैत-
७।२१ दित्याह । किं त्विति । लोकप्रसिद्धेः देहात्मप्रसिद्धिवन्निर्मूलत्वान्न निश्चयत्वमिति शङ्कते । ननु लोकेति । निर्मूलत्वमसिद्धमित्याह । अत आहेति । ब्रह्मज्ञाने सति देवपशुत्वं निवर्तते यस्मात्तस्मात् एषां देवानां न प्रिय[1]मित्यर्थः । अत्रोच्यतइत्यत्र मङ्गलाचरणस्याऽसमर्थनात्प्रश्नाऽननुसारित्वं प्रतिवचनस्येत्याशङ्कयाह । सर्वदेति । परात्मगततत्त्वानुस्मरणस्याऽप्रत्यक्षत्वान्मानान्तराऽभावाच्च कृतमङ्गलत्वमसिद्धमित्याह । किं तत्रेति । प्रमाणाभावो ऽसिद्ध इत्याह । अत आहेति ।

टीकायां भाष्यत्वमेव समर्थ्यते न प्रमाणमित्याशङ्कयापेक्षितं पूरयति । इत्यन्तमिति । युष्मदित्यादिभाष्यं मङ्गलाचरणे प्रमाणमित्युक्तं, संप्रति वृद्धयादिशब्दोच्चारणवत्स्वयमेव मङ्गलाचरणमित्याह । मङ्गलाचरणं वेति । प्रमाणत्वमाक्षिपति । कथमिति । तत्त्वानुस्मरणं किं पदार्थ, उत वाक्यार्थः ? नाद्यः । तद्वाचकपदश्रवणाभावात् । नान्त्यः । संसृष्टपदार्थानामेव वाक्यार्थत्वादित्यभिसंधिः । उच्चारणाऽनुपपत्त्या भाष्यं मङ्गलाचरणगमकमित्याह । तत्राहेति । देवतानुस्मरणमङ्गीकृत्य तस्य मङ्गलाचरणपरत्वाऽभावान्न विघ्ननिवर्तकत्वमिति गूढाभिसंधिः शङ्कते । ननु नेहेति । अनुस्मर्यते इत्यत्र स्वातन्त्र्येणेति शेषः ।
८।४ यथाश्रुतमादाय समाधत्ते । सत्यमिति । तत् कथं चनेत्यस्यैषो ऽर्थः । परमार्थत एवंभूते निरस्तसमस्तोपप्लवे । तद्विपरीतरूपप्रतिभासः कथं चन मिथ्येति कथयितुं तद्भाष्यमिति संबन्धः । कथं चनेति ।

[1] न प्रियमिति नास्ति २ पु० ।

न्दप्रच्छादनेन कर्त्रादिरूपेण व्यवह्रियते इतर इति व्यवहारतो विरोधः ।

तादात्म्याऽयोग्यत्वमाह । विषयविषयिणोरिति । तदेतद- ८।१०
भिप्रेत्योक्तं सर्वोपप्लवरहितो विज्ञानघनः प्रत्यगर्थ इतीति । कोयं विरोध इत्यत्र किंशब्दः प्रश्नार्थ, आक्षेपार्थो वा? नाद्यः, विरोधशब्दस्य प्रसिद्धार्थत्वात् । नान्त्यः । चिदचितोर्विरोधस्य प्रसिद्धत्वादेव, ततश्चायं ग्रन्थो ऽसङ्गत इत्याशङ्क्य विरोधशब्दस्याऽनेकार्थत्वात् व्यक्तिविशेषजिज्ञासया प्रश्नो घटतइत्याह । तत्रेति । लोकइति यावत् । तादात्म्यलक्षणेतरेतरभावानुपपत्तेरुच्यमानत्वात्तदयोग्यत्वं विरोध इति निश्चीयतइत्याशङ्क्य सापि संदिग्धेत्याह । द्विविधेति । इतरस्मिन् सतीतरस्य भावः सहाऽवस्थानम्, इतरस्येतरभावस्तादात्म्यमितीतरेतरभावभेदात्तदनुपपत्तेर्भेद इति द्रष्टव्यम् । प्रश्नपूर्वकं द्वैविध्यं दर्शयति । कथमित्यादिना । सामर्थ्याऽभावे को हेतुरिति न प्रष्टव्यं, स्वभावत्वादित्याह । पदार्थेति । प्रश्नोत्तरं विहाय पक्षान्तरानिरसनमयुक्तमित्याशङ्क्योत्तरं पक्षं कक्षीकर्त्तुं[1]माद्यं पक्षं[2] प्रतिक्षिपतीत्याह । तत्र प्रथममिति । सहाऽनवस्थानं लक्षणं गमकं यस्याऽयोग्यतालक्षणविरोधस्य स तथा[3] । तमःप्रकाशयोरेवोदाहृतत्वात्तत्रैव सहाऽनवस्थानप्रदर्शनमुचितं न च्छायादिष्वित्याशङ्क्य तमःप्रकाशनिदर्शने दूषिते यदि लक्षणयां लक्षितलक्षणया वा छायाऽऽतपादिनिदर्शनमादद्यात् तदा तत्रापि दोषतुल्यता उच्यतइत्याशयवानाह[4] । त- ८।११
त्रेत्यादिना । पूर्वस्यापि सिद्धान्तत्वादुच्यतइति सिद्धान्तोप-

१. पक्षीकर्तुमिति १ पु॰ पा॰ । २ माद्यपक्षमिति १ पु॰ पा॰ ।
३ तथा, सहाऽनवस्थानलक्षण इत्यर्थ इति २ पु॰ पा॰ ।
४ आशयेनाहेति २ पु॰ पा॰ ।

क्रमो ऽयुक्त इत्याशङ्क्य सहाऽनवस्थानलक्षणविरोधे[1] दूषिते
कोऽसौ विरोध इति शङ्कायां परस्पराऽनात्मतालक्षणो विरो-
८।७ धो विवक्षित इत्याह । इदानीमिति । तादात्म्ययोग्यताऽभावे
ऽपि इदं रूप्यमित्यादौ तादात्म्यदृष्टेर्नायं हेतुः साधुरित्याश-
ङ्क्योक्तं टीकायां न जातिव्यक्त्योरिति ।

आत्माऽनात्मानौ न वस्तुत इतरेतरभूतौ इतरेतरभावाऽयोग्यत्वात्तमःप्रकाशवदित्युक्तं, तत्र साध्याऽभावेऽपि साधनं किं न स्यात्? न च तदा तमःप्रकाशयोरपीतरेतरभावप्रसङ्गः[2], तयोर्भावाऽभावरूपतया तदनुपपत्तेरित्यप्रयोजकत्वं भावाऽभावात्मतालक्षणमुपाधिं वा शङ्कते । ननु तमो नामेति । विवादाध्यासित आलोकाऽभावस्तमःशब्दवाच्यः इतरेतराऽभावव्यतिरिक्तत्वे सति आलोकाऽभावत्वाद्व्यतिरेकेणाऽऽलोकवदित्याद्यनुमानैरालोकाऽभावत्वमास्थिषत कणभुगादयः । इतरे त्वन्वयव्यतिरेकाभ्यां रूपदर्शनाऽभावस्तम इति मेनिरे । उभयत्र साधारणं दूषणमाह । उच्यतइति । तमो नाऽभावः धर्मिप्रतियोगिप्रतीतिनिरपेक्षत्वात् कुम्भवदित्यनुमानेन तमालदल[3]श्यामलं तम इत्यनुभवाऽनुगृहीतेन विरोधे इतरस्याऽनुत्थितेर्नाऽभावत्वमित्यर्थः । हेत्वन्तरेण पराहतिमाह । उपचयेति । तमो नाऽभावः अवस्थावत्त्वात् रूपवत्त्वाच्च[4] केशवत् । न चाऽसिद्धिर्हे-
८।२१ तोरित्याह । उपलभ्यमानमिति । यः पुनर्मन्यते तमःप्रतीतिर्भ्रम[5] इति । तथा हि । निमीलिताक्षस्योपलभ्यमानं तमः किं बा-

१ अनवस्थानविरोधे इति २ पु० पा० ।
२ प्रसङ्ग इति प्रसङ्गमिति २ पु० पा० ।
३ तमालमालेति १ पु० पा० ।
४ रूपवत्त्वाच्चेति नास्ति २ पु० पा० ।
५ विभ्रम इति २ पु० पा० ।

मम, उताऽऽन्तरम्? नाद्यः, बहलालोकविततं देशे तदसंभवात् । न द्वितीयः [1]बहिःप्रसरणशीलानां[1] नयन[2]रश्मीनाम् आन्तरतमोग्राहकत्वाऽभावात् । अन्यथा नयनान्तस्थाऽञ्जनग्रहणप्रसङ्ग इति, तं प्रत्याह[३] । बहलेति । निमीलितनयनस्यान्धकारोपलब्धिस्तद्गोलकान्तरवर्तितमोदर्शनमित्यन्वयः । आन्तरस्य तमसो दर्शनं न बाह्यस्येत्यत्र हेतुमाह । आलोकेति ।

मन्दप्रभप्रदीपे मन्दिरे तयोः सहाऽवस्थानं दृष्टमिति कथमालोकविततं देशे तमसोऽसंभव? इत्याशङ्क्याह । बहलेति ।

उपलम्भकाऽभावान्नाऽऽन्तरस्यापि तमस उपलम्भ इत्युक्तं निरस्यति । न विरुध्यतइति । तत्र दृष्टान्तः पिहितकर्णेति । पिहितकर्णपुटस्यापि श्रोत्रादेवान्तरशब्दोपलब्धिवदन्तर्मुखैर्लोचनरश्मिभिरान्तरं तमो गृह्यते । न चातिप्रसङ्गः,आन्तरतमोग्राहकत्वस्या[4]ऽञ्जनग्राहकत्वाऽव्याप्तत्वात्प्रशिथिलमूलतया तर्काऽऽभासः स्यात्[5] । विमतं स्वगताऽञ्जनग्राहि तत्संयुक्तत्वात् यद्येन संयुक्तं तत्तद्ग्राहि यथा संतमसजलादिसंयुक्तं लोचनमिति विवक्षितत्वान्नोक्तदोषाऽवसर इति चेत्,तत्र संयोगित्वमात्रं ग्राहकत्वप्रयोजकत्वेन विवक्षितम्, उत योग्यतावत्त्वविशेषितम्[6]?आद्ये गगनदिगादीनपि गृह्णीयात् । द्वितीये ऽसिद्धिः । न चोद्भूतरूपत्वेन तत्सिद्धिरिति शङ्क्यं,तत्त्वेप्यतिसामीप्येन तद्ग्राह्यत्वाऽनुपपत्तेः । न च प्रकृतेऽप्येतत्समानं, कार्यदृष्टयदृष्टिभ्यां विशेषात् । उ- ८।३३

१ प्रसृतानामिति ३ पु॰ पा॰ । २ नायनेति २ पु॰ पा॰ ।
३ तत्राहेति २ पु॰ पा॰ । ४ ग्राहकस्येति २ पु॰ पा॰ ।
५ साभासत्वात् इति २ पु॰ पा॰ ।
६ योग्यताविशेषितमिति १ पु॰ पा॰ ।

द्भूतस्पर्शस्यापि धूमस्य लोचनदेशे त्वग्ग्राह्यत्वेपि अन्यत्राऽतथात्वात् नित्याऽनुभवप्रसादाद्वा ऽऽन्तरं तमः सिद्ध्यतीत्यर्थः । ननु तमः किमनादि, उत सादि? नाद्यः । आलोकध्वंसे तदुत्पत्त्यनुभवात् । नेतरः । किं चतुर्विधाः परमाणवः कारणम्, उताऽन्यत्? नाद्यः । तेषां खण्डावयविपरम्परया महद्द्रव्यारम्भकत्वात् । न च तदुपपद्यते । आलोकाऽपगमसमसमयमेवोत्पत्तेः । न द्वितीयः, प्रमाणाऽभावादित्याशङ्क्य तस्योत्पत्तिस्तावदुपे-
८।२४ या, पूर्वस्य ध्वस्तत्वादित्याह । आलोकेति ।

आलोकनाशितस्य प्राचीनस्य तमसो यन्मूल[१]कारणं तस्मादेव तज्जातीयस्य जन्म सिध्यतीति[२] योजना । विद्युदादि[३] हि विलम्बमन्तरेण यथा परमाणुभिरारभ्यते तथा तमोऽपीत्यभिप्रेत्य झटिति महाविद्युदादीत्युक्तम् । वस्तुतस्तु अस्मन्मते संतमसस्य न परमाणुकारणत्वं किं त्वविद्यैव चिदधिष्ठिता तमोरूपेण विवर्तते इत्याह । मूलकारणादिति । न च प्रमाणाऽभावचोद्यं, 'सदेव सोम्येदमग्र आसी'दित्यादिवाक्यात् ब्रह्मणोऽद्वितीयताप्रतीतेरित्यविद्याविवर्ततया एव तस्य आश्रयणीयत्वादित्यर्थः ।

एवं निष्पत्तिप्रतीति[४]कारणसंभवात् तमःप्रतीतिर्न भ्रम इति
८।२५ अभ्यधायि[५], संप्रति रूपवत्त्वहेतोरसिद्धिमाशङ्कते । ननु रूपवत इति । रूपवत्त्वस्य स्पर्शवत्त्वं व्यापकं, तद्व्यावृत्तौ रूपवत्त्वमपि व्यावर्तते । तथा च प्रयोगः, तमो नीरूपं स्पर्शविधुरत्वाद्गगनवदिति[६] । विपक्षे बाधकाऽभावा[७]दप्रयोजको हेतुरित्याह । नैष दोष

१ मूलेति नास्ति २ पु० । २ जन्मसिद्धिरितीर्यत पाठः २ पु० ।
३ विद्युदादिवदिति १ पु० पा० । ४ प्रतिपत्तीति २ पु० पा० ।
५ अभिधायेति २ पु० पा० । ६ इत्यर्थ इत्यधिकं २ पु० ।
७ बाधाऽभावादिति २ पु० पा० ।

इति। रूपवत्त्वे स्पर्शविधुरत्वभङ्गो बाधक इत्याशङ्कां प्रतिबन्द्या परिहरति। वायोरिति। अयमर्थः। यत्स्पर्शवत्तद्रूपवत् यथा ९।१
घटादीति व्याप्तेर्यथा वायौ भङ्गस्तद्वद्यद्रूपवत्तत्स्पर्शवदिति व्याप्तेस्तमसि भङ्गः। न च प्रमाणाऽभावः, नमालमालाश्यामलं तम इत्युपलम्भादिति। यद्रूपवत्तच्चक्षुःप्रदेशादन्यत्रोपलभ्यमानस्पर्शवदिति नियमस्य धूमे भङ्गवत् रूपवत्त्वस्य[1] स्पर्शवत्त्वनियमस्य तमसि व्यभिचार इत्याह। धूमस्येति। तस्याऽनुपलभ्यमानस्पर्शत्वात्[2] दृष्टान्तो विषम इत्यत्राह। तद्वदिति। सर्वसाम्यस्या[3]ऽनपेक्षितत्वात् रूपवत्तमः स्पर्शमात्रहीनं स्यादित्यर्थः। यद्वा न केवलं हेतोरप्रयोजकता, ऽसिद्धता चेत्याह। धूमस्य चेति। न च स्पर्शवत्त्वे तदुपलम्भापत्तिरित्यपि शङ्क्यम्, स्पर्शवत्त्वेऽपि धूमस्य लोचनदेशादन्यत्र स्पर्शाऽनुपलब्धिवत् क्वचिदप्यनुपलभ्यमानस्पर्शं तमः किं न स्यादित्यर्थः। सर्वत्र स्पर्श[4]हीनमिति। सर्वत्र उपलभ्यमानस्पर्शशून्यमित्यर्थः।

किं चाऽभावस्तम इति वदन् वादी प्रष्टव्यः, किं तमः[5] एकैकाऽऽलोकाभावः, उत सर्वाऽऽलोकाभावः? आद्येऽपि किं प्रागभावः, उत प्रध्वंसाभावः, आहो स्विदितरेतराभाव? इति, विकल्पत्रय[6]मसंभवीत्याह। सवितृकिरणेति। जन्मविनाशयोरिति ९।४
सतिसप्तमी। प्रदीपजन्मनः प्राक् प्रागभावः, जन्मनीतरेतराभावः, नाशोत्तरकालं प्रध्वंसाभावस्तत्राऽस्ति तथापि सावित्रालोकव्याप्ते देशे तमो नोपलभ्यते, इतरथा तत्रापि तदुपलम्भः

१ रूपवत्त्वस्येति नास्ति २ पु०। २ स्पर्शवत्त्वादिति पु० पा०।
३ सामान्यस्येति १ पु० पा०। ४ सर्वस्पर्शेति २ पु० पा०।
५ एकैकं तम इति २ पु० पा०।
६ इति विकल्पा विकल्पत्रयमिति २ पु० पा०।

स्यात्, प्रागभावाद्यवस्थासु तमोबुद्ध्यभावो विरोध्यालोकसन्निधिनिबन्धन इति वदता विरोध्यभावसहितप्रागभावादेस्तमोबुद्ध्यालम्बनत्व[1]मिति वक्तव्यं, न च तदुपपद्यते, विरोध्यभावगिरा प्रागभावोक्तौ प्रध्वंसेऽनुपपत्तेः, प्रध्वंसोक्तावितरत्राऽनुपपत्तेरितरेतराभावोक्त्या वा ऽऽलोकभावेऽपि तद्भावात्तमोबुद्धिरनिवार्येत्यर्थः । द्वितीयमनूद्य दूषयति । सर्वेति । किमस्य सर्वेषामालोकानां सन्निधानं निवर्तकम्, उत एकैकस्य? आद्ये सकलालोकोदयमन्तरेण तन्निवृत्तिर्न भवेत् । द्वितीयेऽप्येकैकस्य सकलाऽऽलोकाऽभावनिवर्तकत्वाऽभावात्[2] तमोबुद्धिः स्यात् । न चैकैकाऽऽलोक[3]प्रादुर्भावे तदभावस्य व्यावृत्तेर्न तमोबुद्धिप्रसक्ति[4]रिति शङ्क्यम्, प्रागभावादिविकल्पदूषणयोरत्रापि तुल्यत्वादिति हृदयम् ।

९।८

रूपदर्शनाऽभावस्तम इत्यत्रापि किमेकैकस्य रूपस्य दर्शनाऽभावः, उत सर्वस्य? आद्येऽपि किं रूपदर्शनमात्राऽभावः, उत यत्र तमोबुद्धिस्तत्रत्यरूपदर्शनाऽभाव? इति विकल्प्याद्यं प्रत्याह । वहन्त्याऽन्धकारेति । द्वितीयोऽपि प्रागभावादिविकल्पेन दूष्यः । सर्वरूपदर्शनाऽभावस्तम इति पक्षे सर्वरूपदर्शनमन्तरेण[5] तमो न निवर्तेतेत्यर्थः ।

९।७

तथा[6] आलोकसंसर्गाऽभावस्तम इत्यत्रापि किं संसर्गप्रागभाव, उत तत्प्रध्वंसः, आहो स्वित् तदितरेतराभावः? आद्ये प्रध्वंसे तमोबुद्धिर्न स्यात् । द्वितीये प्रागभावे । तृतीयेऽप्यालोक-

१ आलम्बनमिति २ पु० पा० ।
२ आलोकाऽभावाऽनिवर्तकत्वादिति २ पु० पा० ।
३ न चैकालोकेति १ पु० पा० । ४ प्रसक्तिरिति नास्ति २ पु० ।
५ दर्शनोदयमन्तरेणेति २ पु० पा० । ६ तथेति २ पु० पा० ।

व्याप्ते ऽपि देशे तमोबुद्धिः स्यात् । न च भावरूपतमोवादिना ऽपि तद्व्यञ्जकत्वेनाऽऽलोकाऽभावः समाश्रितः, तस्यैव तमोबुद्धिगोचरत्वमिति शङ्क्यम्, इतरेतराऽभावव्यतिरिक्ताऽऽलोकाभावस्य व्यञ्जकत्वमाश्रीयते, न च स त्वयेष्टव्यः, इतरेतराऽभावस्येतरेतराऽभावाऽनिरूपणात् । न च तमसो रूपिद्रव्यत्वे आलोकसहितचक्षुर्ग्राह्यत्वप्रसङ्ग इति वाच्यम् । रूपवद्भावस्याऽऽलोकसहितचक्षुर्ग्राह्यत्वनियमे ऽप्यालोकाभावस्य केवलचक्षुर्ग्राह्यत्वनियमवदत्रापि तदुपपत्तेरित्येतत्सर्वं मनसि निधायोपसंहरति । अलमतिप्रसङ्गेनेति । ९ । ८

विरुद्धस्वभावत्वेनेतरेतरभावे प्रतिक्षिप्ते कथमिति चोद्यस्याऽनुपपत्तिरित्याशङ्क्य पारमार्थिकतादात्म्याऽभावे ऽपि तद्भ्रमः स्यादिति तात्पर्यमाह । ननु दृग्दृश्ययोरिति । अनुपपत्तिरित्यत्र परमार्थत इति द्रष्टव्यम् । विभ्रमो निमित्तं यस्य स तथा, तमित्यर्थः । न च विभ्रमाऽवभासयोरेकत्वान्निमित्तनैमित्तिकता ऽनुपपन्ना[1], पूर्वभ्रमस्योत्तरभ्रमनिमित्ततया[2] विवक्षितत्वेनाऽनुपपत्त्यभावादित्यर्थः । ननु स्वाभाविकतादात्म्याऽभावे ऽपि तादात्म्यभ्रमः स्यादिति चोदिते आत्मनो ऽनात्मांशत्वनिराकरणमसंगतमित्याशङ्क्याऽधिष्ठानाऽध्यस्यमानयोः किं विशेषरूपेणाऽन्यत्र तादात्म्यभावः, उत सामान्यरूपेणेति विकल्प्याद्यमङ्गीकरोति । सत्यमिति । न द्वितीय इत्याह[3] इदमंशमात्रस्येति । इदंरूप्ययोः ९ । १३ सामान्यविशेषादिभावेन क्वचित्तादात्म्यवतोरेव तादात्म्यभ्रमो दृष्टः, नेह[4] प्रकृते तादृशमपि तादात्म्यं समस्तीत्यर्थः ।

---

१ नैमित्तिकत्वाऽनुपपत्तिरिति शङ्कामिति २ पु० पा० ।

२ निमित्ततायाः करणफलयोर्नेति २ पु०पा० ।

३ द्वितीयस्त्वनुपपन्न इत्याहेति २ पु० पा० । ४ न चेति २ पु० ।

किं युष्मदंशस्य स्वस्मान्न संभवो विषयिणश्चिदेकरसत्वादित्यर्थः, उत विषयिणः सकाशान्न संभव? इति। आद्ये व्यधिकरणता, द्वितीये त्वसिद्धिरित्याशङ्क्याह। अयमाशय इति। अवयवश आशयो ऽभिधीयतइत्यर्थः। हेत्वसिद्धिं निरस्यति।
१।१८ चेत्यं हीति। कर्मकारकतया भासने हेतुमाह। जडमिति। फलितमाह। तत्कथमिति। कर्मत्वे ऽप्यात्मत्वं किं न स्या?दित्यत आह। कर्त्तुरिति। क्रियां प्रति गुणभूतः कर्त्ता, तस्य विपरीततया प्रधानतया स्थानमवस्थानं तत्प्राप्तं येन तत्तथोक्तम्। गुणत्वप्राधान्ययोः कथमेकत्र विरोधः? गन्तुर्दिकर्मत्वदृष्टेरित्याशङ्क्याह। एकस्यामिति। द्वितीयमनुवदति। आगन्तुक इति। सोपि विकल्पासह इत्याह। सहेतुरिति। आत्मनो[1] ऽनात्माकारपरिणामे किमन्यो हेतुरस्त्युत ने?ति विकल्पार्थः।

आत्मनो ऽपरिणामित्वम् 'आत्मकृतेः परिणामा'[2] दिति सूत्रेण 'सच्च त्यच्चाभव'दित्यादिश्रुत्या च विरुद्धमित्याशङ्क्य निरवयस्या विद्यां विना तत्त्वतः परिणामाऽनुपपत्तिरित्याशयमाह। न हि निरवयवत्वमिति। आद्यं दूषयति। न सहेतुरिति। असिद्धिं निरस्यति। न हीति। चेतनस्याऽनात्मांशत्वाऽभावेप्यनात्मनश्चैतन्यांशत्वं स्यादिति शङ्कते। तथैनात्मेति। क्व चिद् दृष्टमिति। अहमुपलभइत्युपलब्ध्याश्रयत्वमहंकारस्य दृष्टमित्यर्थः। चैतन्यांशत्वं किं स्वभावः,[3] उताऽऽगन्तुकम्? इति विकल्प्याद्यं प्रत्याह। नेत्याहेति। समयोरप्यात्मनोर्विषयविषयित्ववत् आत्माऽनात्मनोरपि किं न स्या?दित्याशङ्कायामाह। अयमर्थ इति। प्रत्यग्-
१।२५

1 आत्मन इति नास्ति २ पु०।

2 व्या० सू० अ० १ पा० ४ सू० २६।

3 स्वभावत इति १ पु० पा०।

विषयत्वस्य[1] निषिध्यमानत्वान्न व्यभिचार इत्यर्थः । द्वितीयेपीदं निरूपणीयं किमनात्मा स्वतः चिदाकारेण परिणमते, उतान्यतः? नाद्यः, सदा तत्परिणामप्रसङ्गादिति मत्वा द्वितीयं प्रत्याह । परतो ऽपीति । विमतो जडो जडोपादानत्वात् संमतवदित्यर्थः । ९।१

मुखसन्निधानाद्दर्पणस्य तदाकारत्ववदनात्मनोपि चित्सन्निधानाच्चिच्छायता स्यादिति चोदयति । तर्ह्यात्मेति । अनात्मनश्चिच्छायता चिदाकारपरिणामः, उत चैतन्यस्य तत्र संक्रमणम्? नाद्यः, । पूर्वरूपे स्थिते नष्टे वा ऽन्यस्याऽन्यभावाऽसंभवात् । अन्त्येपि संक्रमणं किं तात्त्विकम्, उताऽतात्त्विकम्? न प्रथमः, निष्क्रियत्वात्पूर्णत्वाच्च । न द्वितीयः । क्व चित्तात्त्विकांशांशिताभावे तत्कल्पनाया एवाऽसंभवादित्यभिप्रेत्याह[2] । तत्राहेति । टीकायामपेक्षितं पूरयति । तस्मादिति ।

आत्मा न मुख्यप्रत्यक्त्वादिभाक् अहमिति प्रतिभासमानत्वादहङ्कारवदित्याशङ्क्य प्रतीतिकर्मत्वं हेतु, उत प्रतीतिरूपत्वम्? आद्ये ऽसिद्धिरित्याह । अस्मत्प्रत्यय इति । अस्मच्चासौ प्रत्ययश्चेत्यस्मत्प्रत्ययो ऽन्तः करणम्, अहंप्रत्ययो वा; तत्रदेमंशत्वं कर्मत्वं न विद्यतइति यावत् । तत्र हेतुश्चिदिति । द्वितीये साधनवैकल्यमिति । अहंकारादेरहमित्येव प्रतीयमानत्वान्न युष्मदर्थत्वमिति न तदध्यस्तताक्षेप इति चोदयति । नन्वहंकारादिष्विति । शरीरादौ यद्यपि न स्वरूपेणाहंप्रत्ययः तथापि मनुष्यत्वकाणत्वादिविशिष्टे स समस्तीत्यर्थः । तद्बलानिर्भासिततयेत्र, तच्छब्देनाऽस्मत्प्रत्ययो निर्दिश्यतइति शङ्का स्यात्, तथा चाऽस्म- १०।१

1 प्रत्यक्त्वविषयत्वस्येति २ पु॰ पा॰ ।
2 अभिप्रायेणाहेति २ पु पा॰ ।

त्मप्रत्ययभास्यचैतन्यवत् अहंकारादेर्युष्मदर्थत्वमित्याशङ्कयाह । तस्येति । अस्मत्प्रत्ययस्य विशेषणत्वेनोपात्तत्वाच्चितेश्च प्राधान्यात्तस्या एव परामर्श इत्यर्थः ।

१०।८ अहमिति प्रतीयमानस्य कथं युष्मदर्थत्वं? तत्राह । अहंकारादेरिति । तद्बलनिर्भासिततयैव युष्मदर्थत्वसिद्धेः किं लक्षणत इत्यनेनेत्याशङ्क्य व्याख्यानव्याख्येयरूपत्वान्न वैयर्थ्यमित्याह । अवभास्यतेन लक्षणेनेति । टीकायां तसिप्रत्ययस्तृतीयार्थे, आनन्दादीनां स्वरूपत्वान्न तद्धर्मत्वमितिशङ्कानिरासार्थमपृथक्त्वे ऽपीत्युक्तं, तदनुपपन्नम् । अपृथग्भूतानां पृथग्भावाऽसंभवादित्याशङ्क्योपाधिसंबन्धादविरोधमाह । अन्तःकरणेति । निर्गुणत्वान्निरवयवत्वाच्च नात्माऽनात्मनोः सादृश्यं, नापि विवेकाग्रहः प्रत्यक्पराग्भावादिविषया, व्यावृत्त्युपलम्भात्, ततश्चाऽध्यासव्यापकाऽभावेन व्याप्याऽभावादसंभावितविषयफलत्वात् शास्त्राऽनारम्भ इति पूर्वपक्षः ।

अध्यासाऽसंभवेन विषयाद्यसंभावनया आरम्भे आक्षिप्ते अध्यासाऽसंभवाऽङ्गीकारेण समाधानमभ्यधायि, तदयुक्तम्, अध्यासाऽसंभवे विषयाद्यनुपपत्तेरित्याशङ्क्याऽध्यासाऽसंभवाऽङ्गी-
१०।१२ कारे तात्पर्यमाह । भूयोऽवयवेति । भूयसामवयवानां सामान्यं समानता, सैव सादृश्यं तस्याभावादध्यासाऽसंभवं मामङ्गीकरोतीत्यन्वयः ।

ननु न सादृश्यमध्यासव्यापकं लोहितादिभ्रमे व्यभिचारात्, ततश्च सादृश्याऽभावेनाऽध्यासाऽसंभवाङ्गीकरणमसङ्गतमित्याशङ्क्य किं सादृश्यस्य सोपाधिकभ्रमव्यापकत्वं निषिध्यते, उत निरुपाधिकभ्रमव्यापकत्वम्? नाद्यः, अङ्गीकृतेरित्यभिप्रेत्य द्वितीयं दूषयति । आत्मनि कर्तृत्वादेरिति । इदं रज-

तमित्यादिनिरुपाधिकभ्रमं प्रति सादृश्यस्य व्यापकतादृष्टेः श-रीराद्यध्यासस्य च निरुपाधिकभ्रमत्वात् सादृश्यं वक्तव्यं, त-च्च न संभवति, अतोऽध्यासाऽसंभवाङ्गीकरणमुचितमित्यर्थः ।

सादृश्यस्य निरुपाधिकभ्रमव्यापकत्वे नाऽहंकारादे-रात्मन्यध्यस्तत्वं सिद्ध्यति, सादृश्याभावादित्याशङ्क्य भू-योऽवयवसामान्यसादृश्याभावे ऽपि कार्याऽनुपपत्त्या सादृश्या-न्तरं कल्प्यतइत्याह । निरुपाधिकेति । केतकीसर्पगन्धयोर्नि-र्गुणत्वान्निरवयवत्वाच्च गुणाऽवयवसामान्याऽभावे ऽपि केतकी-गन्धसदृशः सर्पगन्ध इत्यनुभवाद्यथा सादृश्यान्तरमास्थितं तथा ऽत्रापीत्यर्थः ।

निरुपाधिकभ्रमे ऽपि न सादृश्याऽनुगतिरित्याह । शङ्खपी-१०।१६ तिमादाविति । पयस्तिक्तमित्यादिभ्रम आदिशब्दार्थः । का-रणान्तरमित्यज्ञानलक्षणमित्यर्थः । युष्मदित्यादिना किमध्या-सस्य सत्त्वमपलप्यते, उत प्रतीतिरिति विकल्प्याद्यं तथापी-त्यङ्गीचकार, द्वितीये ऽपि किं कारणस्याऽपलापो विवक्षितः, उत प्रतीतेः? आद्येपि किं निमित्तस्य, उतोपादानस्य? न तावदा-द्यः, संस्कारस्य निमित्तत्वात् प्रमाणाऽनुभवसंस्काराऽभावेन विपरीतकार्याऽभावाऽदर्शनादेवानुभवसंस्कार एव प्रयोजकः, स प्रकृते ऽपि सुसंपादः । न चेतरेतराश्रयत्वं, पूर्वाऽनुभवसंस्का-रस्योत्तरभ्रमप्रयोजकत्वादित्यभिसंधायोक्तं, नैसर्गिक इति, तदनुपपन्नं, नैसर्गिकत्वे चैतन्यवत्स्वभावत्वेनोच्छेद्यतासंभवादि-त्याशङ्क्य, नैसर्गिकपदेनाऽनादित्वं विवक्षितं न स्वभावत्व-मित्याशयवानाह । नैसर्गिकेति ।

१ गुणाऽवयवेति १ पु० पा० ।

प्रतीचो जडतां व्यावर्तयति । चैतन्येति । तस्य तु-
च्छतां व्यावर्तयति । सत्तेति । कार्योपहितसत्तानुबन्धित्वं व्या-
१०।२ वर्तयति । मात्रेति । साक्षिस्वरूपमनुसृत्याऽनवच्छिन्नाऽऽनन्दादि-
स्वरूपं सदा तिरस्कृत्य व्यवस्थितमित्याह । अनुबन्धीति । द्वि-
तीये बहुव्रीहिसद्भावात्[1] प्रथमं पक्षान्तरं निरस्यति । अय-
मिति । अध्यास आक्षिप्तो लोकव्यवहारश्च समाधीयतइति वै-
यधिकरण्यशङ्कां निरस्यति । युष्मदस्मदोरिति । अनादेः क-
थं कार्यत्व?मिति शङ्कते । कथमिति ।

प्रवाहरूपेणाऽनादित्वं न स्वरूपेणत्यविरोधं दर्शयितुम-
ध्यासस्वरूपमाह । आत्मनीति । अध्यस्यतइति कर्मपरोऽध्या-
सशब्दः । ततः किमित्यत आह । तत्रेत्यादिना । अनुपभुक्ते रा-
गो नोत्पद्यतइति वदता भुक्तविषयो राग इत्युक्तं स्यात्, न
च तत्संभवति, भुक्ते रागाऽभावादित्याशङ्क्याह । अतज्जातीयइति ।
उपभुक्तसजातीयइत्यर्थः । भोक्तृत्वं च कर्तृत्वाद्यध्यासमपेक्षते इ-
त्यनादित्वं सिद्धमित्याह । एवमिति । कर्तृत्वादीनामन्यतमव्याप्त-
कालत्वं कार्याऽनादित्वं, सुषुप्तादावपि तत्संस्कारसंभवात् अना-
दित्वं युक्तमित्यर्थः । अध्यासात्मको लोकव्यवहार इत्यत्र लोक-
व्यवहारस्याध्यासात्मकत्वं सिद्धमिति पुनस्तत्कथनं व्यर्थमित्या-
शङ्क्याऽध्यासलोकव्यवहारयोर्भिन्नत्वात्कथं सामानाधिकरण्यमि-
१०।४ तिशङ्कानिरसनपुरःसरं तदेव स्पष्टीक्रियतइत्याह । लोकव्यवहार
इति । लोक्यते इति लोकः, लोकशब्दस्य कर्मपरत्ववत् तत्साहच-
र्याद् व्यवहारपदस्यापि तादृक्त्वशङ्कां निरस्यति । व्यवहरण-
मिति । उभयोः कर्मपरत्वे पौनरुक्त्यात् पूर्वत्र कर्मव्युत्पत्त्या प्रा-

१ संभवादिति १ प॰ पा॰ ।

नोपसर्जनार्थोऽध्यासो निर्दिष्टः, उत्तरत्राऽर्थोपसर्जनज्ञानाऽध्यास इत्यर्थः ।

अनेकधा समाससंभवाद्विवक्षितं समासं दर्शयति । लोकइतीति । अर्थक्रियापरत्वं व्यावर्तयति । मनुष्य इति । व्यवहा- १।०।२५
रशब्दस्य हानोपादानयोः प्रसिद्धत्वात्कथमभिमानवाचकत्वेन व्याख्यात?मित्याशङ्क्याह । व्यवहारो ऽभिमानेति । अभिमानपदं चोपलक्षणमित्याह । ज्ञानेति । अध्यासस्वरूपाद्यप्रदर्शकत्वात्सत्याऽनृते इति भाष्यं तद्व्याख्यानं चाऽसंगत?मित्याशङ्क्य तद्व्यावर्त्यां शङ्कामाह । अन्यस्येति । सत्याऽनृतविभागस्याऽसिद्धत्वात् सत्यानृते मिथुनीकृत्येति कथमुक्त?मित्याशङ्क्याह । स्वसिद्धान्तमिति । सत्याऽनृतपदयोर्वचनपरत्वं व्यावर्तयति । सत्यमित्यादिना । कालत्रयबाधाऽभावोपलक्षितं वस्तु सत्यम्, तस्य ज्ञानिकर्मत्वनिराचिकीर्षया ऽनिदमित्युक्तं, तत्र हेतुमाह । चैतन्यमिति । उभयोरध्यस्तत्वे कथं सत्याऽनृतविभाग? इत्याशङ्क्य एकस्य संसृष्टरूपेणाऽध्यस्तत्वमितरस्य स्वरूपेणापीति युक्तो विभाग इत्याह । स्वरूपत इति ।

अध्यासमिथुनीकरणात्मको लोकव्यवहार इत्युक्तं, तदाक्षिपति । ननु कृत्वाप्रत्ययेति । प्रातीतिकाक्रियाभेदादिव्यावृत्त्यर्थमर्थत १।१।२
इति विशेषणं, समानकर्तृकयोः पूर्वकाले इत्यनेन सूत्रेण एककर्तृकयोः पूर्वाऽपरीभावेन स्थितयोः क्रिययोः पूर्वकाले धात्वर्थे क्त्वाप्रत्ययस्य विहितत्वात् क्रियाभेदादेरपेक्ष्य इत्यर्थः । व्यवहारः क्रियतइति क्रियान्तरमध्याह्रियते इत्याशङ्क्य किं लोकव्यवहारं इत्येतद्बलाद् अध्याहारः, उताऽध्यस्येत्येतद्बला?दिति । आद्यस्योत्तरमुक्तमध्यस्य नैसर्गिक इति । द्वितीयमुत्थापयति । ननु किमिनीति । उपसंहारविरोधाच्चैवमित्याह । ने-

त्याहेति । उपक्रमाऽनुरोधेनोपसंहारनयनं किं न स्यादिति, त-
१.१।७ त्राह । न हि पदमात्रेति । त्वामत्ययवैयर्थ्यभयाद्विशेष्यप्रधा-
नपदार्थो ऽध्यासो भेत्तुं न हि युज्यतइत्यन्वयः । प्राधान्यमुप-
पादयति । वाक्यार्थइति । वाक्यार्थमेवाह । उपक्रमे ऽपीति ।
प्रतीयमानइति शेषः । अध्यासो मिथ्येत्युपक्रमे. एवाऽयमना-
दिरिति, उपसंहारे च प्रतीयमानतया वाक्यार्थत्वं, येनोपक्रम्य-
ते येन चोपसंह्रियते स वाक्यार्थ इति न्यायात्ततश्च प्राधान्य-
मित्यर्थः ।

नैसर्गिकगुणविशिष्टत्वेनोत्तरप्रोक्तस्याप्यध्यासस्य प्रत्य-
भिज्ञानाच्च लोकव्यवहारो ऽध्यास इत्याह । नैसर्गिकेति ।
अध्यासलोकव्यवहारशब्दयोरेकार्थत्वे त्वामत्ययस्याऽनाल-
म्बनता स्यादिति चोदयति । किं तर्हीति । मुख्यालम्बना-
भावे ऽपि उपचरितमालम्बनमस्तीत्याह । प्रतिपत्तिर्, इति ।
व्यपदेशमात्रमित्युक्ते निरालम्बनत्वमेवोक्तं स्यादिति, तत्राह ।
उपचारेति । अन्यगतस्याऽन्यत्राऽऽरोपणमुपचार इत्येकस्मि-
न्नध्यासे प्रातीतिकक्रियाभेदपूर्वापरीभावौ न घटेते इति चो-
दयति । कथमिति । स्वरूपेणैक्ये ऽपि विशेषणभेदात्तदुप-
पत्तिरित्याह । को ऽपीति ।

ननु विशेषणभेदादध्यासो भिद्यतइति कथं? न खलु दण्ड-
कमण्डलुभेदाच्चैत्रो भिद्यते इत्याशङ्क्य स्वरूपभेदाऽभावेपि विशि-
ष्टभेद इत्याह । विशिष्ट इति । तथापि वैशिष्ट्यभेदो न तु वि-
शिष्टस्वरूपस्येत्याशङ्क्याह । परोपाधाविति । परोपाधावध्-
यासो भिद्यते गगनवदित्यर्थः । तथापि कथं पूर्वापरीभाव
१.१।१२ इत्याशङ्क्याह । विशिष्टेति । तत्तद्विशेषणविशिष्टार्थं ज्ञात्वा
तत्तद्वाचकशब्दरचनं क्रमेण भवतीति प्रतिपत्तितः पौर्वापर्यम् ।

अध्यासस्याऽज्ञानोपादानत्वमादिदर्शयिषया मिथ्याज्ञाननिमित्त इत्युक्तं, तत्र भ्रान्तिज्ञानानिरासार्थं मिथ्या च तदज्ञानं चेति विग्रहमकरोत्, तत्र विशेषणवैयर्थ्यशङ्कां परिहरति । तत्रे- १.१।१२ ति । न चाऽभावभ्रान्तिज्ञानयोरन्यतरस्य कारणत्वं किं न स्यादिति शङ्क्यम्, अभावभ्रान्तिज्ञानयोः समवायिकारणतायाः क्वचिददर्शनादित्यर्थः । मिथ्याज्ञानशबलेश्वरस्याऽधिष्ठातृत्वं संस्कारद्वारेणैवाऽज्ञानस्य निमित्तत्वं चेति दर्शयितुं भाष्ये निमित्तपदोपादानमिति द्रष्टव्यम् । अज्ञानमिति नञा अभावत्वं प्रतीयते, तत्कथम् अनिर्वचनीयत्वमिति शङ्कायामुक्तमज्ञानमिति । ज्ञानपर्युदासेनोच्यतइति ज्ञानान्यत्वे हेतुमाह । जडात्मिकेति । ज्ञानविरुद्धत्वादज्ञान[१]मित्याह । अविद्येति । आत्मकारणत्वोपपिपादयिषया शक्तिरित्याह । शक्तिरिति ।

मानाऽभावान्न मिथ्याज्ञानस्याप्युपादानत्वमिति शङ्कते । ननु कथमिति । मिथ्याज्ञाननिमित्तत्वे न तावत्प्रत्यक्षं मानम्, अननुभवात् । नाप्यनुमानं, व्याप्त्यसंप्रतिपत्तेः । नाप्यागमः, व्युत्थितं प्रति तदुपन्यासस्याऽनुचितत्वात् । नाप्यर्थापत्तिः, मिथ्याज्ञाननिमित्तत्वमन्तरेणाऽनुपपद्यमानत्वस्या[२]भावादित्यर्थः ।

शुक्त्यज्ञाने रजतभ्रमोदय इतरथा नेत्यन्वयव्यतिरेकाभ्यां तस्य रजतभ्रमोपादानत्वं सिद्धं, तद्दृष्टान्तेनाऽहंकाराद्यध्यासस्याप्यज्ञाननिमित्तत्वं निश्चीयते, विमतो ऽज्ञानोपादानोऽध्यासत्वात्संमतवदित्यभिसंधायाह । तस्मिन् सतीति । १.१।१४

अज्ञानाऽन्वयव्यतिरेकावन्यथासिद्धौ, ततश्च दृष्टान्तस्य

१ विरुद्धत्वाद्वा ऽज्ञानमिति १ पु॰ पा॰ ।
२ मनुपपन्नत्वस्येति २ पु॰ पा॰ ।

साध्यवैकल्यमिति शङ्कते । नन्विति । अन्वयव्यतिरेकौ प्रति-
बन्धकाऽभावविषयतया ऽन्यथासिद्धावित्यन्वयः । किं तत्प्र-
१.१।१७ तिबन्धकं, कश्च तदभाव? इत्याकाङ्क्षायामाह । अध्यासस्येति।
प्रतिबन्धकमिति । उत्पत्तिविरोधीत्यर्थः । प्रतिबन्धकलक्षणनिधु-
रत्वान्न ज्ञानस्य[1] प्रतिबन्धकत्वमित्याह । नैतत्सारमिति । प्रति-
बन्धकलक्षणाऽभावं दर्शयितुं त[2]ल्लक्षणमाह । पुष्कलेति । वि-
रोधि प्रतिबन्धकमित्युक्ते पूर्वज्ञानविरोध्युत्तरज्ञाने ऽतिव्याप्तिः,
तदर्थं कार्योत्पादेति । सामग्र्यभावं व्यावर्तयितुं पुष्कलेति ।
पुष्कलकारणे सति विरोधि प्रतिबन्धकमित्युक्ते पूर्वज्ञाननि-
वृत्तिपुष्कलकारणोत्तरज्ञाने ऽतिव्याप्तिस्तदर्थं कार्येति । फ-
लितमाह । न चेति । दोषस्याऽध्यासपुष्कलकारणान्तर्भावा-
त्तस्मिन् सति तत्त्वज्ञानं न उत्पद्यते निर्दुष्टेन्द्रियार्थसंप्रयोगल-
क्षणकारणाऽभावादित्यर्थः ।

तत्त्वबोधस्याऽध्यासाऽप्रतिबन्धकत्वे ऽपि तन्निवर्तकतया
विरोधित्वात्तदभावविषयतया ऽन्यथासिद्धावन्वयव्यतिरेका-
विति चोदयति । तथापीति । संसर्गाभाव इत्यत्राऽज्ञानमिति
शेषः । अपेक्षिताऽनपेक्षितविषयत्वसंदेहे अनपेक्षितविधेरपेक्षि-
तप्रतिपादनमेवोचितमित्याह । न कार्यस्येति । न विरोधीत्य-
स्याऽयमर्थः । उत्पत्तेरूर्ध्वं निवर्तकाभावापेक्षोपलभ्यते[3] न प्रा-
१.१।२४ गिति । न्यायसंहिताविति । अपेक्षिताऽनपेक्षितविधान्योर-
पेक्षितविधानं बलवदिति न्यायः । हेत्वपेक्षाया अन्यतं ए-
वोपशान्तत्वादन्वयव्यतिरेकौ विरोध्यभावविषयाविति श-

---

१ तत्त्वज्ञानस्येति १ पु॰ पा॰ ।
२ तच्छब्दो नास्ति १ पु॰ ।
३ उपलभ्यत इति १ पु॰पा॰ ।

ङ्क्ते । ननु क्लृप्तमिति । विषयदोषः सादृश्यम् । इन्द्रियदोषः काचादिः । प्रमातृदोषो रागादिः[1] । दोषस्य किं निमित्ततया क्लृप्तिरुत उपादानतया? आद्यस्त्वङ्गीक्रियते इत्याह । सत्यमिति । द्वितीये दूषणमाह । उपादानेति । उपादानान्तरस्या- ११।१५
ऽनिरूपणादज्ञानमुपादानत्वेनोररीकरणीयमित्यभिसंधिः ।

ननु[2] कार्यस्योपादानापेक्षा ऽसिद्धा, प्रध्वंसे व्यभिचारादिति शङ्कामपवदति । सर्वं चेति । विमतं सोपादानं भावत्वे सति कार्यत्वात् घटवदित्यनुमानात् कार्यस्य[3] उपादानापेक्षायामिति संबन्धः । उपादानं विना उत्पद्यमानक्रियादौ व्यभिचारित्वं हेतोः । न चाश्रयस्यैवोपादानत्वं, तयोः सहोत्पद्यमानतयोपादानोपादेयत्वाऽनुपपत्तेरित्याशङ्क्याह । क्रियागुणेति । क्रियेतिविशेषितत्वमादिशब्दार्थः । उत्पद्यमानस्य क्रियादेः य आश्रयस्तस्येत्यर्थः । न च सहोत्पन्नत्वात्तस्योपादानत्वमनुपपन्नमिति शङ्क्यं, क्षणमात्रमगुणं तिष्ठत्युत्पन्नमित्यङ्गीकारात् सहोत्पन्नत्वाऽसिद्धेरित्यर्थः । अथ वोत्पद्यमानस्य घटादेर्य आश्रयस्तस्य मृदादेरुपादानत्वम् । न च मृदादेरुपादानत्वे उत्पद्यमानाश्रयतयोपलम्भो न स्यादिति[4] शङ्क्यम्, उपादानोपादेययोरव्यतिरेकादित्यर्थः ।

कार्यस्य सोपादानत्वनियममङ्गीकृत्याऽज्ञानस्योपादानत्वमाक्षिपति । नन्विति । भावरूपस्याऽज्ञानस्याऽप्रसिद्धस्योपादान- १२।१
त्वंकल्पनाद्वरं प्रसिद्धस्यात्मादेरेवोपादानत्व[5]कल्पनमित्यर्थः ।

---

१ रागादिरादिशब्दार्थ इति २ पु० पा० ।

२ नन्विति नास्ति २ पु० । ३ कार्यस्येति नास्ति २ पु० ।

४ इत्यपीति २ पु० पा० । ५ एवोपादानत्वेति नास्ति २ पु० ।

आत्मादेरुपादानत्वाऽनुपपत्तेरुपादानान्तरं कल्प्यमित्याह। नेति।
यथा ऽऽत्मा सुखादेरुपादानं तथा भ्रान्तेरपि स्यादित्याशङ्क्याह।
१.२।१ आत्मन इति। किं केवलस्योपादानत्वम्, उताऽविद्योपहितस्य?
नाद्यो, निरवयवद्रव्यत्वेन परिणामायोग्यत्वात्। द्वितीये मदिष्ट-
सिद्धिः, निदर्शनमप्यसंमतमित्यर्थः। उक्तदोषाऽभावादन्तःकर-
णमुपादानं स्यादित्याशङ्क्य किमिन्द्रियसंयोगमनपेक्ष्य, उताऽपे-
क्ष्य? नाद्य इत्याह। अन्तःकरणस्येति। 'परतन्त्रं बहिर्मन'
इत्यभ्युपगमादिन्द्रियसंयोगाऽनपेक्षितत्वमनुचितमित्यर्थः। द्वितीयं
दूषयति। मिथ्येति। मत्यये सत्येव विपरिवर्तते तिष्ठति तथोक्तं,
तस्मिन्नित्यर्थः। प्रतिभासमात्रशरीरस्य समारोपितस्य प्रतिभा-
मात्मागसत्त्वादिन्द्रियसंयोगाऽयोग इत्यर्थः।

मिथ्याज्ञानस्याऽनिन्द्रियजन्यत्वे इन्द्रियाऽन्वयव्यतिरेका-
ऽनुविधानविरोध[1]माशङ्क्याह। अधिष्ठानेति। अधिष्ठानसामा-
न्यबोधमन्तरेण भ्रमाऽनुपपत्तेस्तद्विषयत्वेनाऽन्यथासिद्धिरित्य-
र्थः। इतश्चान्तःकरणं नोपादानमित्याह। अन्तःकरणस्येति।
ज्ञानस्यान्तःकरणपरिणामित्वेन तदाधारत्वं वक्तव्यम्। न च
तत्संभवति, किं केवलस्यान्तःकरणस्याधारत्वमुत चिदध्यस्त-
स्य![2] नाद्यः, जडत्वात्। द्वितीये चिदध्यासस्तत्तादात्म्यस्फुरणं
तादात्म्यं च गगनप्रसूनायमानमिति कथमपरोक्षमथामित्यादि-
१.२।५ त्यर्थः। इतोपि न केवलस्योपादानत्वमित्याह। आत्मन इति।
अज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वं नियतं, तत्र भ्रान्तेरन्तः-
करणाश्रयत्वे[3] आत्मनि तदभावात्सम्यग्बोधत्वं बन्ध[4]निवृ-

१ व्यतिरेकविरोधमिति २ पु० पा०।
२ चिदध्यस्तस्येति १ पु० पा०। ३ आश्रयत्वादिति २ पु० पा०।
४ बोधबन्धेति १ पु० पा०।

क्योरपि तदाश्रयत्वं न स्यादिति नित्यमुक्तत्वमापतेदित्यर्थः ।

आत्माऽन्तःकरणयोरनुपादानत्वसाधनफलमाह । तस्मा- १२।६
दिति । तस्मान्मिथ्याज्ञान[1]मेवाऽध्यासोपादानमिति संबन्धः ।
दोषाऽन्वयव्यतिरेकाभ्यां दोषस्यैवोपादानत्वं किं न स्या?-
दित्याशङ्कयाऽन्यथासिद्धिमाह । काचादीति । बहिरङ्गनिमित्तवि-
षयत्वकल्पनाद्वरं तस्या[2]न्तरङ्गोपादानविषयत्वकल्पन[3]मित्याश-
ङ्कयाह । अध्यासं प्रत्यनाश्रयस्थानतयेति । आश्रयतया स्थानं
स्थितिर्न येषां तान्यनाश्रयस्थानानि, तेषां भावस्तत्ता, तयेति
यावत् । दोषाश्रयत्वेनाऽध्यासस्याऽनुपलम्भान्न दोषोपादानत्व[4]-
मित्यर्थः ।

अज्ञानस्यं मिथ्याज्ञानाश्रयत्वेनानुपलम्भे ऽप्युपादानत्ववत्
काचादेरपि तथात्वमित्याशङ्कयाऽयोग्यत्वान्नेत्याह । मिथ्याभूत-
मिति । दोषस्य सत्त्वादध्यासस्य च तद्वैपरीत्यान्न तयोरुपादानो-
पादेयतेत्यर्थः । मिथ्यात्वे हेतुमाह । मिथ्यार्थेति । अर्थस्य मि-
थ्यात्वात्तज्ज्ञानमपि मिथ्येत्यर्थः । उपादानस्यावश्यंभावित्वमुक्तं
स्मारयति । उपादानेति । अथ वा मिथ्यात्वेपि सत्योपादान-
त्वं किं न स्या?दित्याशङ्कयाह । उपादानेति । उपादानस्य स-
त्यत्वे तत्कार्यस्यापि सत्यत्वं स्यात्तयोरभेदादित्यर्थः । इतोपि ते-
षामनुपादानत्वमित्याह । भिद्यमानेष्विति । व्यावृत्तेष्वननु- १२।७
गतेष्विति यावत् । काचकामलादिदोषाणां परस्परव्यभिचारि-
त्वात् कार्ये ऽननुगतत्वाच्च नोपादानत्वमित्यर्थः । अज्ञानकारण-
वादे नोक्तदोषाऽनुषक्तिरित्याह । मिथ्याभूतस्येति । सत्यत्वे

१ पश्वात्मेमिति २ पु॰ पा॰ । २ तयोरिति २ पु॰ पा॰ ।
३ कल्पनमिति नास्ति २ पु॰ ।
४ दोषस्योपादानत्वमिति २ पु॰ पा॰ ।

ज्ञाननिवर्त्यत्वं न स्यादित्येवकारार्थः । ततश्च[1] तस्योपादानत्व-मुचितमित्याह । सर्वकार्येति । सर्वभ्रमानुसारित्वादपि तदेवोपा-दानमित्याह । सर्वत्रेति । अज्ञानं न भ्रान्त्युपादानं तदना-
१२।८ श्रयत्वात् काचादिवदित्याशङ्क्याह[2] । अज्ञानस्येति ।

कथं तर्ह्यात्माश्रयतया स्फुरण?मित्याशङ्क्याऽज्ञानस्यात्म-न्यध्यस्तत्वात्तज्जन्यस्यापि तन्निष्ठतया स्फुरणं संगतमित्याह । आ-त्माश्रयतयेति । एवकारव्यावृत्त्यर्थ[3]माह । नात्मेति । ज्ञानाध्याम-स्यात्माश्रयत्वेपि कथमर्थाध्यासस्य तदाश्रयत्वम्? इदं रूप्यमिति बहिरुपलम्भादित्याशङ्क्य शुक्तीदमंशावच्छिन्नचैतन्यमोहकार्य[4]त्वात्समारोपितस्य शुक्त्याद्याश्रयतया विभ्रमत्वादित्याह । आत्मा-श्रयेति । को वा ब्रूते नान्तरित्यत्र वक्ष्यत इत्यर्थः । कथं पु-नरित्यत्र कथंशब्दस्याक्षेपार्थतामाह । एकस्यैवेति । न च प्रवा-हरूपेणाऽनादित्वस्याऽभिहितत्वान्न विरोधोक्तिरिति शङ्क्यम्, टीकायां वक्ष्यमाणार्थमाकृष्य नैसर्गिकपदव्याख्यानोपयोगितया विवरणकार आह स्मेत्यपौनरुक्त्यादित्यर्थः ।

विरोधे चोदिते तमनिरस्याऽविद्यासाधनमसंगतमित्या-शङ्क्य किं निमित्ताऽधीनाऽभिव्यक्तिकत्वं नैमित्तिकत्वमित्य-ङ्गीकृत्य विरोधं चोदयसि, उत प्रागसतो निमित्ताऽधीनसत्ता-
१२।११ वत्त्व?[5]मिति विकल्प्य आद्ये न विरोध इत्याशयं स्पष्टयति । त-त्रेति । विरोधे चोद्य इति यावत् । कारणस्य यद् रूपं स्वभाव[6]स्त-दात्मनेत्यर्थः । कारणरूपेण कथं नैसर्गिकत्वं? तदात्मताया ए-

१ सतश्चेति २ पु॰ पा॰ । २ प्राग्वत्प्राऽसिद्धिमाहेति २ पु॰ पा॰ । ३ व्यावर्त्यमिति १ पु॰ पा॰ । ४ भवर्च्छिन्नकारमेति २ पु॰ पा॰ । ५ सत्ताकत्वमिति १ पु॰ पा॰ । ६ यद्रूपं तत्स्वरूपमिति २ पु॰ पा॰ ।

त्वासिद्धेरित्याशङ्क्याह। अध्यासेति। अध्यासस्य प्रवाहेण जन्म यस्मात्तत्तथानिर्दिष्टमध्यासस्य प्रवाहरूपेण जन्माध्यासप्रवाहजन्म, तेन हेतुनेति विग्रहो वा । अध्यासस्योपादानात्मतासिद्धेः तस्माज्जन्माऽनुपपत्तेस्तदात्मत्वमित्यर्थः । प्रवाहरूपेणापि अनादित्वं घटयितुं शक्यतइत्याशयेनोक्तं प्रवाहेति । अन्यथा१.२।१३ मिथ्यार्थाऽवभासोऽनुपपत्तेरित्यत्र हेतोर्वक्ष्यमाणत्वादवश्यमेवेति पदद्वयवैयर्थ्यमाशङ्क्याह। अवश्यमिति। प्रमाणान्तरस्याऽभिधीयमानत्वान्न वैयर्थ्यं, तत्रावश्यमिति पदादनुमानं सूचितम् । एवेति प्रत्यक्षमिति प्रमाणद्वयत्व[1]माहेत्यर्थः ।

प्रत्यक्षस्य ज्यैष्ठ्यात्प्रथमं तदाह। प्रत्यक्षमिति । अहमज्ञ इत्यज्ञानाश्रयत्वेन मामन्यं च न जानामीत्यात्माऽनात्मकर्मकाऽबोधाश्रयत्वेनात्मन्यपरोक्षप्रतीतिदर्शनादज्ञानस्य सत्त्वमनात्मनस्त्वज्ञानकर्मत्वमनुभवमवलम्ब्योक्तं न वस्तुत इत्यर्थः । प्रत्यक्षस्याऽभावविषयत्वेनाप्युपपत्तेर्न भावरूपाऽविद्यासिद्धिरित्याह । ननु ज्ञानेति । विमतो नाऽभावविषयः अपरोक्षत्वादहं दुःखीति प्रत्ययवदित्यनुमानविरोधान्नाऽभावविषयत्वं तस्येत्याह । नाऽपरोक्षेति । विपक्षे बाधकाऽभावा[2]दप्रयोजकत्वमित्याशङ्क्य किमेतत् षष्ठप्रमाणवादिनां चोद्यम्, उत प्रत्यक्षाऽभाववादिनां? तत्राद्यं दूषयति। अभावस्येति । योग्यत्वे सति अनुपलब्ध्याख्यषष्ठप्रमाणविषयत्वेनाऽभावस्य पारोक्ष्यम्, ततश्चाऽभावप्रत्ययस्याऽपरोक्षत्वभङ्गो बाध इत्यर्थः । द्वितीयं प्रत्याह । प्रत्यक्षेति। कथमसंभव१.२।१८ इति शङ्कायां किं धर्मिप्रतियोगिनावनुभूय ज्ञानाऽभावमनुभवति,

१ प्रमाणरूपवत्त्वमिति २ पु० पा० ।

२ बाधाऽभावादिति २ पु० पा० ।

उताऽननुभूयेति विकल्प्याद्यं प्रत्याह । मयीति । द्वितीयं दूषयति ।
१२।२० अनवगतइति । धर्म्यादिप्रतिपत्तौ ज्ञानाऽभावो ऽनुभूयते न धर्माद्यप्रतिपत्तौ इत्यर्थः । धर्म्यादिप्रतिपत्तेरभावप्रतिपत्तिकारणत्वात्तदभावे कार्याभाव इति किमु वक्तव्यमित्यभिप्रेत्य सुतरामिति । धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योरित्युक्तं दोषं षष्ठप्रमाणवादिमते ऽतिदिशति । षष्ठप्रमाणेति । मतान्तरेप्येतत्तुल्यमित्याह । फलेति । अर्थेन सहाऽनुभूयमानत्वादपि अज्ञानं न ज्ञानाभाव इत्याह । इहेति । लोके त्वदुक्तमर्थं न जानामीत्यज्ञानमनुभूय प्रवर्ततइति सम्बन्धः ।

अर्थे विज्ञाते ऽपि तद्गतसंख्याज्ञानाऽभावाभिप्रायेण व्यपदेशसंभव इत्याशङ्क्य निदर्शनान्तरमाह । संख्यामिति । संख्यायां संख्यान्तराऽभावात्संख्यां न जानामीत्युक्तेः संख्याज्ञानाऽभावविषयत्वं विरुद्धमित्यर्थः । तत्रापि परोक्षतया ज्ञाते अपरोक्षज्ञानाऽभावाभिप्रायेण व्यपदेशोपपत्तिमाशङ्क्य नित्यपरोक्षाऽपूर्वादौ व्यपदेशस्याऽपरोक्षज्ञानाऽभावाभिप्रायत्वाऽनुपपत्तेर्मैवमित्याह । शास्त्रेति । जानन्नेव न जानामीति ब्रूते परपरीक्षार्थं न त्वज्ञानसंभवादित्याशङ्क्य श्रवणगुरुशुश्रूषाद्यनुपपत्त्या तत्राऽज्ञानं कल्प्यतइत्याह । तच्छ्रवणादाविति । अर्थज्ञानतदभावयोर्यथा न समकालत्वं तद्वत्तदज्ञानतज्ज्ञानयोरपि एतदज्ञानं नैतज्ज्ञानसमकालीनम् एतदज्ञानत्वादेतज्ज्ञानाभाववदित्याशङ्क्याऽप्रयोजकत्वेन परिहरति । भावरूपाऽज्ञानेति । भा-
१२।२१ वाऽभावयोः खल्वेककालत्वं विरुद्धं न तु भावयोः; न हि घटभावे पटभावाऽनुपपत्तिरित्यर्थः । एतदज्ञानं नैतज्ज्ञानसमकालीनम्, एतज्ज्ञाननिवर्त्यत्वात् एतज्ज्ञानप्रागभाववदित्याशङ्क्य किं

१ एतज्ज्ञानप्रागभाववदिति २ पु॰ पा॰ ।

ज्ञानशब्देन वृत्तिर्विवक्ष्यते, उत साक्षी? नाद्यः। सिद्धसाध्यत्वा[1]-
दित्यभिप्रेत्य द्वितीये ऽसिद्धिमाह । न चेति । विमतं नाज्ञान- १२।२५
निवर्तकं तत्स्फोरकत्वात् यद् यत्स्फोरकं न तन्निवर्तकं, यथा घट-
ज्ञानमित्यर्थः । विपक्षे बाधकमाह । न हीति । घटज्ञानेन घट-
स्यापि निवृत्तिप्रसङ्गादित्यर्थः । असिद्धो हेतुरिति शङ्कते ।
नन्विति । किं साक्षिचैतन्यं घटविशेषिताऽज्ञानं भासयति, उ-
त केवलम्? नाद्यः, विषयस्य प्रमाणगम्यत्वनियमात् । अन्य-
था प्रमाणवैयर्थ्यात् । नेतरो, ऽज्ञानमित्यप्रतीतेरित्यर्थः ।

केवलस्य साक्षि[2]वेद्यत्वाभावे ऽपि विशिष्टस्य साक्षिवेद्य-
त्वादज्ञानस्फोरकत्वं सिद्धमित्याह । उच्यतइति । न च प्र-
माणवैयर्थ्यमपीत्याह । तत्र ज्ञाततयेति । प्रमाणानां ज्ञातताज-
नकत्वात् न वैयर्थ्यमित्यर्थः । न च केवलस्य साक्षिवेद्यत्वा-
भावे ऽपि विशिष्टस्यापि न साक्षिवेद्यत्वमिति वाच्यम् । के-
वलपरमाणोर्मानसप्रत्यक्षत्वाऽभावे ऽपि परमाणुमहं न जानामी-
ति ज्ञानविशेषणतया प्रत्यक्षविषयत्वोपगमादित्यर्थः । ज्ञातता-
विशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वे विषयत्वाऽविशेषाद-
ज्ञातताविशिष्टस्यापि सव्यवधानत्वमित्याशङ्क्याह । अन्यस्त्वि-
ति । अज्ञाततायाः अनादित्वान्न तज्जनने प्रमाणापेक्षा, नापि
तद्बोधने, विरोधात् । तस्मात्साक्षात्साक्षिवेद्यत्वमित्यर्थः । अज्ञा-
नस्य प्रत्यक्षतां निगमयति । इतीति । धर्मिप्रतियोगिप्रतिप-
क्ष्यप्रतिपत्त्योर्न ज्ञानाऽभावप्रतिपत्तिरित्युपपत्तिशब्दार्थः ।

अवश्यपदसूचितमनुमानमाह । अनुमानमपीति । सा- १३।४

१ सिद्धसाधनत्वादिति २ पु॰ पा॰ ।
२ केवलसाक्षीति १ पु॰ पा॰ ।

ध्यविशेषोपादानेन सिद्धस्य धर्मीविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तं द्रष्टव्यम् । वस्तुपूर्वकमित्युक्ते आत्मवस्तुपू-
१.३।१ र्वकतया ऽर्थान्तरत्वं, तदर्थं वस्त्वन्तरेति । चक्षुरादिव्यावृत्त्यर्थं स्वदेशगतेति । अदृष्टादिकं व्यावर्तयति स्वनिवर्त्येति । उत्तरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं स्वविषयावरणेति । प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति। स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता, तदर्थं स्वविषयावरणेति। स्वविषयावरकान्धकारव्यावृत्त्यर्थं स्वनिवर्त्येति । विषयगताज्ञातताव्यावृत्त्यर्थं स्वदेशगतेति । मिथ्याज्ञानं व्यावर्तयति वस्त्वन्तरेति । धारावाहिकद्वितीयादिज्ञाने व्यभिचारव्यावृत्त्यर्थमप्रकाशितेति । अर्थपदं तु स्पष्टीकरणार्थम् । मध्यवर्तिप्रदीपप्रभायां स्मध्यसाधनवैधुर्यपरिहाराय प्रथमेति विशेषणम् । सवितृकिरणव्याप्तप्रदेशस्थप्रदीपप्रभाव्यावृत्त्यर्थम् अन्धकारइति ।

किमनात्मज्ञानं धर्मि, उत आत्मज्ञानं धर्मि? नाद्यो, ऽनात्मावरकस्याऽज्ञानस्यानङ्गीकारात् । तत्साधने बाधापातात् । न द्वितीयः । अनात्मज्ञाने व्यभिचारात् । अप्रकाशितार्थप्रकाशकत्वं च किमप्रकाशितार्थप्रकाशकर्तृत्वम्, उत करणत्वम्? नाद्यो ऽसिद्धेः साधनवैकल्यप्रसङ्गात् । न द्वितीयो, ऽत एव । ततो यत्किंचिदेतदिति केचित् । प्रतिपन्नस्यात्मज्ञानस्याऽनात्मज्ञानस्य च धर्मित्वमिति ब्रूमः । न च बाधापत्तिः । घटाद्यवच्छिन्नचैतन्यं प्रत्यक्षादिविषयत्वेनापेयते तच्चाऽज्ञानावृतमिति कथं बाधः । न च हेतोर्दुर्निरूपत्वं, प्रकाशशब्देन तज्जन्यो व्यवहारो लक्ष्यते, ततश्चाऽप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तस्य चोभयत्राऽनुगतत्वान्नाऽसिद्ध्यादिरिति । अनुमाननिगमनार्थं इतिशब्दः ।

१.३।२ प्रमेयमुपसंहरति । ततश्चेति । अविद्यायाः शक्तिमत्त्वा-

त्कथं शक्तिरित्यभिहित?मिति, तत्राह । शक्तिरिति । आत्मका- १.३।८
रणत्वनिर्वोढृत्वा[1]दात्मपरतन्त्रत्वाच्च शक्तिमत्यामपि शक्तिशब्द
उपचरित इत्यर्थः । बाह्यघटादेर्विषयत्वमाध्यात्मिकाहंकारस्य
चाश्रयत्वमनुभवमाश्रित्योक्तं बाह्याध्यात्मिकेष्विति । वस्तुतस्तु
अविद्यातत्स्वरूपानुबन्धीनीत्युक्तं, तदनुपपन्नम्, अनात्मतन्त्रत्वे
तदुपादानत्वविरोधादित्याशङ्क्य टीकार्थं स्पष्टयति । तत्स्वरूप-
मिति । तेषाम् अनात्मवस्तूनामात्मतत्त्वं स्वरूपमधिष्ठानत्वादा-
रोपितसर्पादेः रज्जुरिवेत्यर्थः । अनात्मविशिष्टात्मपारतन्त्र्यं
व्यावर्तयितुं सत्तामात्रेत्युक्तम् । प्रत्यक्षाऽनुमानाभ्यामविद्यासि-
द्धिस्तत्र हेत्वाकाङ्क्षाऽभावादन्यथेति ग्रन्थाऽनुपपत्तिरित्याशङ्क्य
प्रमाणान्तरपरतया व्याचष्टे । किं चेति । मिथ्यार्थतदवभासयो-
रनुपपत्तेरिति टीकार्थः ।

अहंकारादितदवभासयोर्मिथ्यात्वाऽसिद्धेः कथं तदनु-
पपत्त्या ज्ञानसिद्धिरित्याशङ्क्य तात्पर्यमाह । विशुद्धेति ।
ज्ञानस्यैवाऽध्यासो नाऽर्थस्येति मतं निरस्यति । अर्थज्ञानेति ।
निरालम्बनज्ञानाऽयोगादर्थोऽप्यध्यस्त इत्यर्थः । समीचीन-
ज्ञानवद्यथार्थत्वान्नाऽध्यासत्वमित्याशङ्क्याह । मिथ्याभूतस्येति ।
आत्मनि शुक्तौ च प्रतीयमानस्याऽर्थस्य सत्यत्वाऽनुपपत्तेः
कल्पितत्वेन तज्ज्ञानमपि मिथ्येत्यर्थः । मिथ्याऽर्थावभासाऽनुपप-
त्त्या मिथ्याभूतमुपादानमेष्टव्यमित्युक्तं, तत्रान्यथोपपत्तिं निर-
स्यति । सत्योपादानत्वइति । मृज्जन्यस्य घटस्य मृदात्मतावत् १.३।१२
सत्योपादानस्य सत्यत्वं स्यादित्यर्थः । किं तदुपादानं सादि,
उताऽनादि?-नाद्यो ऽनवस्थानात् । न द्वितीयस्तत्र प्रमाणाऽभा-

[1] कारणनिर्वोढृत्वादिति १ पु॰ पा॰ ।

वादित्याशङ्क्य कल्पनालाघवादनाद्येव तदित्याह । तस्यापी-
१.३।१५ति । तथापि कथमज्ञानसिद्धिरित्याशङ्क्याह । यथेति । आ-
त्मन्यान्तरस्यर्थ मिथ्येति । संसृष्टरूपेण तस्यापि मिथ्यात्वं, तदर्थं
स्वयमिति । प्रागभावं व्यावर्तयितुं मिथ्योपादानमिति विशे-
षणम् । अनादि भावरूपं ज्ञानापनोद्यमज्ञानमित्युक्तं भवति ।
स्वातन्त्र्यं व्यावर्तयति । आत्मेति । अर्थापत्तिं निगमयति ।
इतीति । इतिशब्दो ऽन्यथोपपत्त्यभावपरामर्शार्थः । इत्युक्त-
मित्यत्र मिथ्यार्थावभासाऽनुपपत्तेरित्यत्रेति शेषः [१] ।

बाह्याऽऽध्यात्मिकेष्वित्यत्राऽनात्मनो ऽविद्याविषयत्वमुक्तं,
तदाक्षिपति । नन्वित्यादिना । विषयत्वाऽभावं दर्शयितुं वि-
षयलक्षणमाह । येनेति । अज्ञानजनिताऽऽवरणाऽतिशयशालि-
त्वादनात्मनो विषयत्वमित्याशङ्क्याह । न चेति । अर्था-
ऽनुपपत्तेः, प्रयोजनाऽनुपपत्तेरित्यर्थः । आद्यं संग्रहवाक्यं वि-
वृणोति न तावदित्यारभ्य न च स्वयमित्यतः प्राक्तनग्र-
न्थेन । आवरणे किं प्रत्यक्षं मानम्, उताऽनुमान,माहो
अनुपपत्तिः? आद्ये ऽपि किमनात्मन्यधिगते आवरणमधिगम्य-
ते, अथ वा ऽनुपलब्धे? इति विकल्प्याऽऽद्यं प्रत्याह । न
तावदिति । नीलाऽवगमविरोधात्तत्राऽऽवरणं दुरधिगममित्य-
र्थः । द्वितीयं प्रत्याह । अनवगतइति । नीलप्रतिपत्तिं विना
तत्राऽऽवरणं नाऽनुभूयतइत्यर्थः । अशक्यश्चालुभव इत्याह ।
१.३।२०नतरामिति । द्वितीयमुत्थापयति । नन्ववगतइति । विमतं
पूर्वमावृतमिदानीमवगतत्वात् संमतवदित्यनुमानादावरणसिद्धि-
रित्यर्थः । किमिदानीमवगतत्वमात्रं हेतुः, उत इदानीमेवा-

---

१ यवभासानुपपत्तेति शेष इति २ पु॰ पा॰ ।

ऽवगतत्वम्? नाद्य इत्याह । न धारावाहिकेति । धारावाहिक- १.३।२१
ज्ञानगम्ये इदानीमवगतत्वमस्ति न पूर्वमाकृतत्वमिति तत्र व्य-
भिचारः[1] । न च तत्राप्युत्तरकालवैशिष्ट्यस्य प्रागज्ञातत्वान्न
व्यभिचार इति शङ्क्यम्, विशेषणभूतार्थे व्यभिचारादित्यर्थः ।
द्वितीयमुत्थापयति । नन्विदानीमेवेति । असिद्धो हेतुरित्याह ।
न पूर्वेति । इदानीमेवाऽवगतत्वे सिद्धे प्रागनधिगतत्वं[2] सिद्ध्य-
ति, तत्सिद्धाविदानीमेवावगतत्वसिद्धिरितीतरेतराऽऽश्रयाद्वेत्व-
सिद्धिरित्यर्थः । तृतीयमनुवदति । ननु पूर्वाऽपरेति । पूर्वाऽप-
रकालसंबन्धविषयिणी तावत्प्रत्यभिज्ञा दृष्टा, सा च मध्ये
ऽनवगतिमन्तरेण नोपपद्यते, अन्यथा तत्रापि प्रत्यभिज्ञा स्या-
दित्यर्थः। अन्यथोपपत्त्या परिहरति । न प्रत्यभिज्ञेति। धारावाहि-
कज्ञानगम्ये आत्मनि पूर्वापरसम्बन्धिविषय[3]प्रत्यभिज्ञादर्शना-
त् सदावगते आत्मन्यपीति योजना ।

अर्थापत्त्यन्तरमुद्भावयति । मध्यइति । ज्ञानजन्या स्मृ- १.१।२४
तिर्ज्ञानस्मृतिस्तस्या अभावादिति विग्रहः । (पूर्वोत्तरकालयोर-
नुभूतस्य स्मरणान्मध्यवर्तिनश्चाऽस्मरणान्मध्ये ऽनवगतिरन्य-
था तत्रापि स्मरणं स्यादित्यर्थः । )[4] अनवगत्यभावेपि स्मृत्यभा-
वसंभवशङ्कां[5] व्यावर्तयितुं ज्ञानेति विशेषणम् । अवगत्यङ्गीकृ-
तौ तद्विनाशे संस्कारस्याऽवश्यंभावात्तन्मूला स्मृतिः स्यान्न
च सेत्यनवगतिरित्यर्थः । अस्मरणमन्यथोपपन्नमित्याह । नाव-

१ व्यभिचारश्चादिति १ पु० पा० ।
२ अनवगतत्वमिति २ पु० पा० । ३ संबन्धिविषयेति नास्ति २ पु० ।
४ एतन्मध्यगो ग्रन्थः कुण्डलितः २ पु० ।
५ अभावसङ्कामिति २ पु० पा० ।

गतइति । पथिपतितोपलब्धतृणादिवदस्मरणसंभव इत्यर्थः ।
१.४।२ अनुभूयमानमावरणं कथं युक्तितो निरस्यते? इति शङ्कते। तथा-पीति। प्रतीतिमङ्गीकरोति। सत्यमिति। तर्हि प्रतीत्यनुसारेण प्रत्येतव्यमप्याश्रीयतामित्याशङ्क्याह। विषयैरिति। अर्थप्रतिपत्त्यप्रतिपत्त्योः प्रमाणेनाऽनवगतेः प्रतिपत्तुमयोग्यत्वात्साक्षिणा स्वाध्यस्ता ऽनवगतिरनुभूयतइति न त्वदिष्टसिद्धिः । न च घटो ज्ञात इत्यनुभवाऽनुपपत्तिः। लौहित्यमुखयोः[1] स्फटिकाऽऽदर्श-प्रतिबिम्बितयोः परस्परसंबन्धो यथा भासते[2] लोहितं मुखमिति तथा ऽज्ञानाऽनात्मनोरात्मन्यध्यासात् परस्परसंबन्धप्रतिभासो-पपत्तिरित्यर्थः । मानत आवरणाऽप्रतिपत्तावपि साक्षिनस्तत्प्र-तिपत्तिसंभवादर्थो ऽनवगत इति प्रतिपत्तेर्मुख्यत्वमित्याशङ्क्या-ह। न चाऽध्यस्तस्येति।

आवरणभङ्गमन्तरेणाऽर्थप्रतिपत्त्ययोगात्तद्भङ्गो वक्तव्यः, स च किं प्रमाणादुत साक्षिणो? नाद्य इत्याह। द्विचन्द्रादिवदिति। न द्वितीयः। साक्ष्यधीनसिद्धितया तन्निवर्तकत्वाऽयोगादित्यर्थः। मानाऽसंभवसमर्थनमुपसंहरति । तस्मादिति। अर्थाऽनुपपत्ते-रित्येतत्प्रपञ्चयति । न चेति। निष्पादितक्रिये कर्मण्यविशेषा-ऽऽधायिनः साधनस्य साधनन्यायाऽतिपातन्यायादावृतरूपे ऽना-त्मन्यज्ञानमावरणलक्षणमतिशयं कथमादध्यादित्यभिप्रायः।

विषयलक्षणविधुरतामुपपाद्याऽविषयत्वमुपसंहरति। तस्मा-
१.४।५ दिति। विमतं नाऽज्ञानविषयस्तज्जनितातिशयाऽनाधारत्वाद्व्य-तिरेकेणात्मवदित्युक्ते सिद्धसाधनमेतदित्याह। तत्राहेति। तत्र

1 लोहितमुखयोरिति १ पु॰ पा॰।

2 प्रतिभासते इति २ पु॰ पा॰।

तत्स्वरूपं चेति तत्स्वरूपं, तस्याऽवभासस्तथोक्तस्तमिति वि-
ग्रहः । अज्ञानात्मकं यत्स्वरूपमनात्मवस्तु तस्याऽवभासम-
विद्या न प्रतिबध्नाति । तत्र हेतुमाह । जडेष्विति । अ- १।४।६
चिद्रूपत्वेन तत्र प्रकाशाऽप्रसक्तेर्न तत्प्रतिबन्ध इत्यर्थः । चश-
ब्दो ऽवधारणार्थः, नैव प्रतिबध्नातीति । कथं तर्ह्यनात्मविषय-
त्वं[1] निर्दिष्टमिति शङ्कते । किं त्विति । आवरणाऽनाधाने ऽप्यज्ञा-
नस्य विक्षेपहेतुत्वादनात्मविषयत्वं युक्तमित्याह । अन्यदेवेति ।
रूपान्तराऽवभासहेतुरित्यत्र वक्ष्यत इत्यर्थः । अनात्मनः स्वत
आवृतस्वरूपत्वे संप्रत्यज्ञान इति व्यवहाराऽनुपपत्तेरज्ञातत्वम-
न्यनिमित्तं वक्तव्यमित्याशङ्क्याऽन्यथोपपत्तेर्मैवमित्याह । त-
त्रेति । अनात्मविषयाऽन्तःकरणपरिणामाऽनुदयलक्षणवैक-
ल्यादित्यर्थः । शङ्कान्तरनिरासपरो वा ऽयं ग्रन्थ इत्याह । अथ
वेति । किं तच्छङ्कान्तरं? तत्राह । चैतन्येति । स्वतः प्रकाशाऽप्र-
सक्तावपि नित्यचैतन्यसान्निध्यात् प्रकाशप्रतिबन्धलक्षणकृत्य-
संभवात्कथं नाऽज्ञानविषयत्वमित्यर्थः ।

प्रमाणवैकल्यादित्यत्र प्रमाणशब्देन किं वृत्तिज्ञानं विव-
क्षित, मुताऽऽत्मस्वरूपम्? आद्ये प्रश्नप्रतिवचनयोर्व्यधिकरणता,
द्वितीये तस्याऽनित्यत्वेन वैकल्यादित्यसंगतमित्याशङ्क्याह ।
अनात्मेति । प्रमाणस्य, साधकस्येति यावत् । चैतन्यस्य नित्य-
त्वेन वैकल्याऽनुपपत्तिमुक्तां धुनीते । आवरणादिति । अना- १।४।११
वृतचैतन्यस्य विषयसाधकत्वात्तदावरणाद्विषयाऽनवगत्युपपत्ते-
र्न[2] पृथगावरणकल्पनमित्यर्थः ।

१ अनात्मनो विषयत्वमिति १ पु° पा° ।

२ पृथगिति नास्ति २ पु° ।

१.४।१२ टीकागतचशब्दार्थमाह । इतश्चेति । आत्मावरकाऽज्ञाने सत्यपि तत्प्रतिपत्तिवदनात्मावरकाज्ञानमिति मते ऽपि तत्प्रतीतिः[1] किं न स्यादित्याशङ्क्याऽस्मन्मते यदावृतं तन्न प्रतिभाति, यद्भाति तन्नावृतमिति युज्यते, त्वन्मते तु न तथा, ऽनात्मप्रथायामप्यज्ञानस्य तदावरकत्वादित्याह । यद्यात्मेति । अस्त्वज्ञाननिवृत्तिः, को दोष इति चेत्? तत्र वक्तव्यं, किमनात्मावरक[2]मज्ञानमेक,मुत नानेति? । तत्राद्यं दूषयति । अतः सत्यामेवेति । त्रिष्वपि कालेष्वात्मन्यविद्यायां सत्यामेव विषयप्रतिभासदर्शनान्नाऽज्ञाननिवृत्तिर्युक्तेति योजना । रजतप्रतिभासात् प्राक्कारणत्वेन तत्समये तत्स्थितिहेतुत्वेनोत्तरत्र विपर्य्ययान्तरजकत्वेनेति त्रिकालवर्त्तित्वमविद्याया इति न विषयज्ञानान्निवृत्तिर्युक्तेत्यर्थः । अत इत्येतन्नाऽनात्मावरणमित्यमेन संबध्यते । द्वितीयमनुवदति । ननु शुक्तिकेति । अन्यदेवेत्यत्राऽन्यदेवेति वीप्सा द्रष्टव्या । अतश्च ज्ञानेनाऽऽवरणभङ्गे विषयप्रतिभासो ऽविद्यान्तरात्तु विपर्ययान्तरोदयश्चाऽविरुद्ध इत्यर्थः । न चाऽऽवरणनिवृत्तौ शुक्तिप्रतिपत्तिवदात्मतत्त्वप्रतिपत्तिरपि स्यादित्यपि शङ्क्यमित्याह । अन्यच्चेति । कल्पनागौरवप्रसङ्गान्नेयं कल्पना शोभां बिभर्त्तीत्याह । तन्नेति । विषयाऽग्रहण-
१.४।१८ व्यवहाराऽनुपपत्त्या[3] तत्राप्यावरणकल्पनमित्याशङ्क्याह । विषयेति । वृत्त्यनुदयाच्चैतन्याऽऽवरणाच्च विषयग्रहणोपपत्तिरित्यर्थः ।

अनात्मनो ज्ञानविषयत्वं निराकुर्वतः पूर्वाऽपरपराहतिः

---

१ प्रतिपत्तिरिति २ पु॰ पा॰ ।

२ किमात्माऽनात्मावरकमिति १ पु॰ पा॰ ।

३ व्यवहाराऽन्यथाऽनुपपत्त्येति २ पु॰ पा॰ ।

स्यादिति शङ्कते । किं च तर्हीति । अज्ञानस्य तत्राऽतिशया-
न्तरजनकत्वात्तद्विषयत्वाऽभिधानं युक्तमित्याह । तदाहेति । १४।२०
शुक्त्यज्ञानस्य तदनाच्छादकत्वे ऽपि कथं रूपान्तराऽवभास-
जनकत्व[1]मिति चेत्तत्र वक्तव्यं, किमनाच्छादकत्वाद्विपर्ययजन-
कत्वाऽभावः साध्यते, आहो विपर्ययहेतुत्वं तदाच्छादकत्वमिति,
तत्राद्यं निराकरोति । हेतुरेवेति । शुक्त्यज्ञानस्य तदनाच्छादकत्वे-
पि विपर्ययहेतुत्वं घटते, शुक्त्यवच्छिन्नचैतन्यस्याऽऽवरकत्वाच्छु-
क्त्यवच्छिन्नचैतन्यविषयप्रमाणोदयेनाऽऽवरणे निवृत्ते विपर्ययनि-
वृत्तिप्रसिद्धेः । अतस्तदावरणेन विपर्ययजनकत्वं युक्तमित्यर्थः ।
विमतं शुक्त्याच्छादकं तत्र विक्षेपहेतुत्वात् यो यत्र विक्षेपहेतुः
स तदाच्छादको यथा चैतन्यस्येत्याशङ्क्य परिहरति । केवल-
मिति । आच्छादकत्वाभावे ऽप्युक्तविधया विपर्ययजनकत्वो-
पपत्तेरप्रयोजको हेतुरित्यर्थः ।

आत्माऽऽवरकमज्ञानमनात्मनि विक्षेपं जनयतीत्युक्तं, तदा-
क्षिपति । नन्वत्रापीति । अनात्मावरकत्वाऽनङ्गीकारात् कथम-
नुपपत्तिसाम्य[2]मिति शङ्कते । कथमिति । पूर्वोक्ताऽनुपपत्त्यभावे
ऽप्यनुपपत्त्यन्तरं दर्शयितुमद्वैतमतं दर्शयति । शुक्तिकाज्ञानमिति ।
अस्तु को दोष ? इत्यत्राह । तत्रेति । अज्ञानस्याऽनुभूयमानत्वात्
कथं तत्प्रतिक्षेप इत्याशङ्क्याह । अत इति । एकाऽज्ञानवादे
तन्निवृत्तावज्ञानान्तराऽननुभवप्रसङ्गो ऽतःशब्दार्थः । कल्पनागौ-
रवप्रसङ्गान्न भेदकल्पनेत्याशङ्क्याह । अध्यासस्येति । मिथ्याभूतस्य
सत्योपादानतोऽनुपपत्तेर्नायं पक्षः साधुरित्याशङ्क्याह । उपादा- १४।२४
नेति । ज्ञानेनाऽज्ञाननिवृत्त्यनिवृत्त्योरपि नाऽनुपपत्तिरित्याह ।

---

१ प्रवभासकत्वमिति २ पु॰ पा॰ ।

उच्यतइति । अनिवृत्तौ तावद्दोषाऽभावमाह । अस्मिन्पक्षइति ।

तर्हि सविलासाऽज्ञाननिवृत्तेर्बाधकत्वं कथं घटते? इत्याशङ्क्य
१८।१ पक्षान्तरमाह । अथ वेति । 'मायां तु प्रकृतिं विद्या'दित्यादिवाक्यात् कल्पनालाघवाऽनुगृहीतान्मूलाज्ञानमेकमेष्टव्यं, तस्य चाऽनन्ता अवस्थाः कल्प्यन्ते व्यवहारनिर्वाहाय, तत्र च कारणत्रितयाऽनुरोधेन काचिदवस्था रजताद्याकारेण विवर्तते, तस्यां चाऽधिष्ठानतत्त्वसाक्षात्कारान्निवृत्तायां विपर्यासनिवृत्तिरिति न किंचनाऽवद्यमिति द्रष्टव्यम् ।

उपादाननिवृत्तिमन्तरेणोपादेयनिवृत्तिपक्षे ऽनिर्मोक्षप्रसङ्ग इति चोदयति । कथं पुनरिति । न च ज्ञानादज्ञाननिवृत्त्यदृष्टावपि 'तरत्यविद्यां वितता'मित्यादिवाक्यात् ज्ञानादज्ञाननिवृत्तिरिति वाच्यम् । शास्त्रस्यापि दृष्टाऽनुसारेणाऽज्ञाननिवृत्तिबोधकताऽभ्युपगमादित्यभिप्रायेणाह । दृष्टद्वारेणेति । ज्ञानस्य विरोधिनिवर्तकताया लोके दृष्टत्वादज्ञानस्यापि ज्ञानविरुद्धत्वात्तन्निवर्त्यता घटतइत्याह । नैष इति । नीलार्थप्रतिपत्त्यप्रतिपत्त्योस्तत्राऽऽवरणस्य दुरधिगमत्ववत् विक्षेपस्यापि दुरधिगमत्वमधिष्ठाने प्रतिपन्ने विपर्ययस्यैवाऽभावादनधिगतिरधिष्ठानेऽनधिगते न तत्र विक्षेपाधिगतिरित्याशङ्क्याह । न चाऽऽवरणेति । अधिष्ठानसामान्याऽऽकारसंघटिततया रूपान्तरं भ्रान्त्याऽधिगम्यते, तद्विशेषबोधस्य भ्रमविरोधित्वादिति कुत आवरणपक्षोक्तदोषप्रसङ्ग इत्यर्थः ।

अनात्मवदात्मनो ऽज्ञानविषयत्वाऽनुपपत्तिस्तज्जनिताऽति-
१८।२ शयाऽनिरूपणादिति शङ्कते । नन्वेवमिति । अज्ञानैक्येपीत्यर्थः । अनात्माऽऽवरणं विना तत्र विक्षेपसंभवेपि इति वा । अज्ञानं निमित्तं यस्य तदज्ञाननिमित्तम् । आवरणं च तत्कृत्यं चेत्या-

वरणकृत्यम् । नन्वनात्मनि प्रकाशाऽप्रसक्तया ऽऽवरणानुपपत्ता- १८।८
वप्यात्मनि स्फुरद्रूपे आवरणं संभवतीति चोदयति । कथमि-
ति.। तत्र वक्तव्यं, किमावरणं प्रकाशनाश, उत तत्कार्यप्रतिब-
न्धः? इति विकल्प्याद्यं दूषयति । न तावदिति । 'न हि द्रष्टुर्दृष्टे-
र्विपरिलोपो विद्यत' इति स्वरूपाऽनपायप्रतिपत्तेः स्वरूपवि-
नाशआत्मनो ऽपि विनाशप्रसङ्गाच्च नाऽऽद्यः पक्षो युक्त इत्यर्थः।
द्वितीयं निरस्यति । नापीति । विषयस्य स्फुरणं कार्यं वि-
षयाऽवभासात्मनोत्पन्नत्वान्न तत्प्रतिबन्धुं शक्यते इत्यर्थः। नयना-
दिकारकाणां सहकारिप्रतीक्षया कार्यकरत्ववत् ज्ञानस्यापि
कार्यजनने कारकत्वात्सहकार्यपेक्षा, ततश्च प्रतिबन्धसम्भव इति
शङ्कां व्यावर्तयति । प्रतीक्षेति । ज्ञानस्य कारकत्वे सहकार्य्य-
पेक्षा, तदेवाऽसिद्धं, कार्यं कुर्वाणं कारकमित्युच्यते, न चेद-
मर्थाश्रयमतिशयमादधाति, प्रध्वस्तादिषु तदसम्भवादित्यर्थः ।
आवरणाऽसम्भवफलमाह । तस्मादिति ।

ननु प्रत्यक्षादिना ऽज्ञानमसाधि, अतः कथमाक्षेप? इति,
तत्राह । अनुपयोगादिति । नाऽज्ञानमदृष्टार्थं किं त्वावरणार्थं,
तच्चोक्तविधया दुर्निरूपमिति कथमज्ञानसिद्धिरित्यर्थः। आवर-
णाऽभावे नित्यमुक्तत्वप्रसङ्गात् तदेष्टव्यमिति समाधत्ते । त-
त्राहेति । आवरणदुर्निरूपत्वे चोदिते तत्प्रतिसमाधेयम्, न च
प्रतिसमाधीयते । न चा[1]ऽनवभासस्याऽऽवरणकल्पकत्वं, पुरु-
षान्तरसंवेदने व्यभिचारात्; प्रत्यगात्मनीति[2]. विशेषणकृत्यं
च न पश्याम इत्याशङ्क्य तात्पर्यमाह । अयमर्थ इति । नास्ति न १८।१९
प्रकाशते चेति. योयमात्मालम्बनो व्यवहारः स आत्मन्यावर-

१ न च तदिति २ पु० पा० । २ इत्यादीति २ पु० पा० ।

णमन्तरेण नोपपद्यत' इति सम्बन्धः । नैवंविधो व्यवहारो ऽस्मा-
हमिति सत्तास्फूर्तिदर्शनादित्याशङ्क्य कर्माद्यात्मकव्यवहारे ऽप्य-
१९।१४ शमानायाद्यतीतात्मनि नैवंविधो व्यवहार इत्याह । आत्मतत्त्वेति ।
आवरणमन्तरेणापि पुरुषान्तरसंवेदनवत् तथाव्यवहारोपपत्ति-
रित्याशङ्क्याह । अस्ति प्रकाशतइति । अभावस्यावरकत्वं व्या-
वर्त्तयितुं भावरूपेणेत्युक्तम् । आवरणाऽभावे ऽप्येवंविधो व्य-
वहारः किं न स्यादित्याशङ्क्याह । सति पुष्कलकारणइत्या-
दिना[1]। सन्निहिते ऽप्यर्थे कुड्यादिना ऽऽवृते प्रकाशतइति व्यव-
हाराऽभावस्तदर्थमसति चेति । एवमपीन्द्रियसंयोगाद्यभावे नै-
तादृशो व्यवहारस्तदर्थमाह । सति पुष्कलेति । इन्द्रियसंयोग-
मात्रं पुष्कलकारणशब्दार्थः । मा भूत् तर्हि व्यवहार इत्याशङ्क्य
तस्योपलभ्यमानत्वादावरणं कल्प्यमित्याह । अत इति. । 'अ-
नुमानं चेत्यस्यायमर्थः । विमतो व्यवहारो भावरूपाऽज्ञानप्रयुक्ता-
वरणनिमित्तः । अस्ति प्रकाशतइति व्यवहारपुष्कलकारणे सति
तद्विपरीतव्यवहारत्वात् । यन्नैवं न तदेवं, यथा ऽस्ति प्रकाशते
घट इति व्यवहार इति ।

एवं तात्पर्य[3]मभिधाय अक्षरार्थं दर्शयति । तत्सिद्ध्यर्थमि-
त्यादिना प्रत्यक्चितीत्यन्तेन ग्रन्थेन । विशेषणवैयर्थ्यमित्युक्तं,
तन्निरस्यति । तत्सिद्ध्यर्थमिति । अर्थापत्त्यनुमाने तच्छब्दार्थः ।
जडे वस्तु[4]न्यनवभासो ऽग्रहणनिमित्तो न तथा ऽऽत्मनि स्वप्र-
१९।१८ काशत्वादित्यर्थः । आवरणं दुर्निरूप्यमित्युक्तमनुवदति । किं त-
दिति । अनवभास एव दुर्निरूप इति तत्राह । नास्तीति । यो-

---

१ न संभवतीति २ पु॰ पा॰ । २ इत्यादिनेतीति २ पु॰ पा॰ ।
३ तात्पर्यार्थमिति २ पु॰ पा॰ । ४ जडवस्तुनीति १ पु॰ पा॰ ।

.ग्यतायाः कल्पकमाह। व्यवहारेति। अनात्मनि प्रतिबन्धमन्तरेण विक्षेपस्तदात्मनि[1] विक्षेपो ऽस्तु, किं प्रतिबन्धेनेत्याशङ्क्याऽनवच्छिन्नसंविद्रूपाऽऽनन्दात्मनि प्रतिबन्धं विना विक्षेप एव नोल्लसति। अन्यत्र स्वत एव प्रतिबद्धत्वान्न प्रतिबन्धापेक्षेत्याह। न चेति। १८।११

आत्मा स्फुरद्रूप आवृत इत्येतद्विरुद्धमित्याशङ्क्य किमावरणप्रतीतिर्निरस्यते, उत[2] यौक्तिकत्वं? नाद्यो ऽङ्गीकृतेरित्याह। अविद्येति। चशब्देनाऽप्रतीतिपक्षं निरस्यति। अहमज्ञो मामन्यं च[3] न जानामीत्यावरणाऽनुभवान्न तन्निरास इत्यर्थः। स्वयंप्रकाशे ऽपि पुरुषान्तरसंवेदने यथा ऽग्रहणं तद्वदत्रापीत्याह। ननु प्रमाणेति। तत्र भिन्नत्वात् प्रमाणवैकल्यादग्रहणं युक्तम्, अत्र तु ब्रह्मणः प्रत्यक्त्वान्नैवमित्याह[4]। नेत्याहेति। अज्ञानादन्यदुर्निमित्तं यस्य न विद्यते तदनन्यनिमित्तं, तस्य भावस्तत्त्वं तस्मादित्यर्थः। हेत्वसिद्धिमुक्तां निरस्यति। अत इति। निमित्तान्तरदुर्निरूपत्वमतःशब्दार्थः। कुड्यादेरपि व्यवधायकत्वदर्शनात् कथमज्ञानमेव व्यवधायकं? तत्राह। मूर्त्तेति। ब्रह्मणः प्रत्यक्स्वरूपत्वान्न मूर्त्तद्रव्यं तद्व्यवधायकमित्यर्थः।

तथापि कथं भावरूपाऽज्ञानसिद्धिरित्याशङ्क्याह। अत इति। भावरूपेणेत्यत्र तात्पर्यार्थः कथितः, अत्र त्वक्षरार्थ इत्यपौनरुक्त्यम्। अज्ञानशब्दार्थपर्यालोचनया ऽग्रहणादेवाऽज्ञानमिति शङ्कते। नन्वग्रहणेति। अज्ञानमित्यत्र नञः किमभावोऽर्थः, उत तद्विरोधी, आहो तदन्यः? आद्ये ग्रहणाऽभावः स्यादित्याह। अग्रहणेति। द्वितीये ग्रहणनिवर्त्यभ्रान्तिज्ञानमेव १९।२

१ आत्मनीति नास्ति १ पु०। २ निरस्यति, यद्वेति २ पु० पा०। ३ मन्यं चेति नास्ति २ पु०। ४ इति परिहरतीति २ पु० पा०।

स्यादित्याह । मिथ्याज्ञानेति । तृतीये संस्कारः स्यादित्याह ।
तत्संस्कारेति । आवरणाऽनुपपत्त्या ग्रहणादिविलक्षणं ग्रहण-
१६।४ निवर्त्यमज्ञानमित्याशङ्क्याऽन्यथोपपत्तिमाह । तएवेति । वि-
क्षेपहेतुत्वमपि तेषामेवेति चशब्दार्थः । अज्ञानशब्दस्याऽन्यथा-
व्युत्पत्तेर्मैवमित्याह । नेत्याहेति । संस्कारमात्रमेव शेषो यस्या-
ऽज्ञानस्य तत्संस्कारमात्रशेषमित्यज्ञानाऽभावः प्रतीयतइत्याह[1] ।
तत्रापीति । अहंकारादिविक्षेपस्य[2] विपरीतरूपस्य संस्कारमा-
त्रस्य शेषो यस्मिन् तत्तथोक्तं, शेषशब्दो भावप्रधानः । त-
च्छेषत्वं यथा स्यात्तथा सुषुप्त्यादौ स्थित्वा जागरादौ कर्म[3]-
वशाद्विक्षेपरूपेण प्रादुर्भवति, ततश्चाऽनवभासविक्षेपहेत्वज्ञानमे-
ष्टव्यम् । इतरथा संस्कारमात्राद्विक्षेपप्रादुर्भावाऽसम्भवात् सु-
षुप्त्यादौ मुक्त्यापत्तेश्चेति टीकार्थः ।

सुषुप्त्यादावज्ञानस्य कल्पकाऽभावात्कथं तत्राऽवस्थान?मि-
ति टीकार्थाऽनभिज्ञः शङ्कते । कथमिति । अत्राऽनवभासाऽनु-
पपत्त्या तत्राऽज्ञानसिद्धिः । न चान्यथासिद्धिः । तथा हि, किं
भिन्नत्वादनवभासः, उत मिथ्याज्ञाना,दाहो तत्संस्कारा,दथ वा
ग्रहणात्, किं वा कर्मणः, उताऽन्यस्मा?दिति विकल्प्याद्यं नि-
रस्यति । न तावदिति । न चाऽनन्यनिमित्तत्वादित्यत्रास्य
कल्पस्य निरस्तत्वात् पुनस्तन्निरसनमनुपपन्नमिति शङ्क्यं, मत-
भेदेन पुनर्निरासस्म्भवादित्यर्थः । द्वितीयं दूषयति । नास्मीति ।
सुषुप्तेः सर्वकार्यप्रविलयरूपत्वात्तत्र मिथ्याज्ञानाऽभाव इत्यर्थः ।
१६।८ तृतीयं दूषयति । नापि तत्संस्कारेति प्रतिबन्धकत्वाऽभावे[4] हेतु-
माह । सत्स्वपीति । विमतो न तत्त्वावभासप्रतिबन्धकः सं-

१ इत्याशङ्क्याहेति २ पु॰ पा॰ । २ विक्षेपरूपस्येति २ पु॰ पा॰ ।
३ कर्मादीति २ पु॰ पा॰ । ४ प्रतिबन्धकाभावे इति १ पु॰ पा॰ ।

स्कारत्वात् रजतभ्रमसंस्कारवदित्यर्थः । चतुर्थं दूषयति । ना-
प्यग्रहणेति । किमग्रहणं स्वरूपग्रहणस्याऽभावः, उत आ-
गन्तुकस्य? नाद्य इत्याह । स्वरूपेति । स्वरूपइति हेतुगर्भं १.६।१०
विशेषणम् । द्वितीयं प्रत्याह । स्वयंप्रकाशमानइति । कादाचि-
त्कग्रहणाभावेऽप्यात्मनः स्फुरणान्न तस्य प्रतिबन्धत्वमित्यर्थः ।
पञ्चमं निरस्यति । नापीति ।

अनवच्छिन्नाऽऽनन्दात्मचैतन्यस्याऽनवभासप्रसञ्जनमिष्टमि-
ति शङ्कां निरस्यति । अणुमात्रस्येति । अज्ञानप्रतिबन्धे सत्यपि
यथा चिन्मात्रावभासस्तथा कर्मप्रतिबन्धपक्षेऽपीत्याशयेन
शङ्कते । अज्ञानेपीति । वैषम्यमन्नैतदित्याह । न तस्येति । अ-
ज्ञानस्य चित्प्रतिभास्यत्वान्न चित्प्रतिबन्धकत्वमित्यर्थः । स्वयं
विषयो यस्य चैतन्याऽवभासस्य स तथोक्तः । कर्मणामपि चिद्भा-
स्यत्वान्न चित्प्रतिबधकत्वमित्याशङ्क्य किमेतत्त्वन्मतमाश्रित्यो-
च्यते, उत मन्मतम्? इति विकल्पाऽऽद्यं प्रत्याह । न चाऽज्ञानस्ये-
ति । फलोदयाऽनुपपत्तिगम्यत्वात्कर्मणामित्यर्थः[२] । द्वितीयं
प्रत्याह । न चेति । न केवलं प्रतिबन्धकत्वे मानाभावः, अस्ति
वैपरीत्ये मानमित्याह । संस्कारत्वादिति । विमतानि न प्र-
तिबन्धकानि संस्कारत्वात् भ्रान्तिसंस्कारवत् । न चाऽसिद्धिः,
कर्मशब्देन यागादिसूक्ष्मरूपाऽभिधानादित्यर्थः । प्रतिबन्धका-
न्तरस्य चाऽनिरूपणादनादिभावरूपाऽज्ञानमेष्टव्यमित्याह । त-
स्मादिति । अखण्डतमोगुणस्य तत्प्रतिबन्धकत्वान्न परिशेषा-
दज्ञानसिद्धिरिति शङ्कते । ननु द्रव्यान्तरमिति । प्रमाणाऽभा- १.६।१८
वान्मैवमित्याशङ्क्य 'ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत' इत्यु-

---

१ चिद्भास्यत्वादिति २ पु॰पा॰ । २ कर्मणोऽपीत्यर्थ इति १ पु॰पा॰ ।

भयसिद्धस्य तमसः प्रतिबन्धकत्वसम्भवान्नाऽज्ञानकल्पनमित्या-
१६।१८ह। किमज्ञानेति। विकल्पाऽसहत्वान्नैवमित्याह। नैतदिति।
द्रव्यान्तरं नित्यमनित्यं वा? नाद्य इत्याह। ब्रह्मेति। कुम्भप्रति-
पत्तिप्रतिबन्धकसंतमसध्वंसे कुम्भोपलम्भवत् प्रतिबन्धकभङ्गे[1]
ब्रह्मप्रतिपत्तिर्वक्तव्या, न च नित्यत्वे तद्भङ्गः सुकर[2] इत्यर्थः।
द्वितीये ऽपि तत्किं कर्मणा निवर्त्त्यते, उत ज्ञानेनेति? नाद्यो
मानाभावात् अयुक्तेश्चेत्यभिप्रेत्य द्वितीयं दूषयति। ज्ञानेति।

तत्र स्वपक्षं प्रसाध्य परपक्षं प्रतिक्षेप्तुं तमुत्थापयति।
अत्रेति। भाट्टमताद्विशेषमाह। सर्वेति। पञ्चस्थलेष्वेव भेदाऽभे-
दौ भट्टमते, अस्य तु सर्वत्रेति विशेषः। जल्पने हेतुमाह।
वेदान्तार्थेति। वेदान्तव्याख्यातृत्वात्तस्यापि संप्रदायवित्त्वं,
तत्राह। गहनेति। वेदान्तार्थश्चासौ गहनश्चेति वेदान्तार्थगह-
नस्तत्र संप्रदायहीन इत्यर्थः। वेदान्तार्थे गहनो यः संप्रदाय-
स्तद्धीन इति वा विग्रहः। तर्हि तज्जल्पननिरासप्रयासो मुधा,
तत्राह। दुर्जनेति। दुर्जनाः श्रौतस्मार्तमार्गाऽननुसारिणः। ज-
ल्पनमाह। न किलेति। संसारकार्याऽनुपपत्त्या ऽज्ञानं कल्प्यते,
इत्याशङ्क्य परमार्थत्वान्न तस्याऽज्ञानकार्यत्वमित्याह। सक-
लेति। 'सता सोम्य तदा संपन्नो भवति' इत्यादिवाक्यात्
सुषुप्तौ ब्रह्मभावप्रतिपत्तेर्नाऽज्ञानलक्षणं प्रतिबन्धकमस्ति, ततश्च
१६।२३न तस्य संसारहेतुत्वमित्याह। अवस्थात्रये ऽपीति। 'एतं ब्र-
ह्मलोकं न विदन्ति' 'सति संपद्य न विदु'रिति चाऽज्ञानस्थिति-
प्रतिपत्तेर्वचनान्तरस्य च विक्षेपाऽभावाभिप्रायत्वादज्ञानस्य कथं
संसारहेतुत्वाऽभाव? इत्याशङ्क्याह। असंसारेति। संसारविप्रे-

---

१ भङ्गेनेति १ पु॰ पा॰। २ सुगम इति २ पु॰ पा॰।

ज्ञात् प्रागविच्छिन्नमुत्तरकाले च विच्छिन्नमज्ञानं नेत्यर्थः । चित्प्रकाशस्याऽविरोधित्वात् जडप्रकाशस्य च सुतरामविरोधित्वान्नाऽज्ञाननिवृत्तिसम्भव इत्यर्थः ।

किं तर्ह्यनवभासनिमित्त?मिति शङ्कते । किं त्विति । अ-१.६।१४ ग्रहाद्येवाऽनवभासनिमित्तमित्याह । भ्रान्तीति । चशब्दात्संस्कारस्याऽज्ञानत्वमुक्तम् । भ्रान्तेरज्ञानत्वे निरस्ते ऽर्थात्तत्संस्कारस्याऽज्ञानत्वं निरस्तं स्यादग्रहणं त्वयोग्यतया प्रतिषिद्धमित्यभिप्रेत्य भ्रान्तिं निरस्यति । अयं प्रष्टव्य इति । भिन्नाऽभिन्नविषयत्वेन सर्वप्रत्यययाथार्थ्यान्न भ्रान्तिसिद्धिरिति किंशब्दार्थः ।

प्रश्नं[१]मत्वोत्तरमाह । अहंकारेति । सिद्धान्ती सोपहासमाशयमाविष्करोति । अहो इति । विस्मरणशीलत्वमाह । खण्ड इति । विमतं प्रमाणं भिन्नाऽभिन्नविषयत्वात् खण्डो गौरितिप्रत्ययवदित्यर्थः । विमतमप्रमाणं निषिध्यमानविषयत्वादिदं रजतमितिप्रत्ययवदित्यनुमानविरोधं शङ्कते । नाहमिति । निषिध्यमानविषयत्वमात्रं हेतु,रुत प्रतिपन्नोपाधौ निषिध्यमानविषयत्वम्? नाद्यो व्यभिचारादित्याह । तत्र नायमिति । द्वितीयमनुवदति । इदंरजतवदिति । इदमि प्रतिपन्नं रजतं तत्रैव-निषिध्यते नेदं रजतमिति । यथा ऽऽत्मनि प्रतिपन्नं मनुष्यत्वं तस्मिन्निषिध्यतइति तस्य भ्रान्तित्वम् । खण्डो गौरित्यस्य तु तद्वैपरीत्यान्न भ्रान्तित्वमित्यर्थः । एषोपि हेतुस्तत्र व्यभिचरतीत्याह । न खण्डो गौरिति । गोत्वोपाधौ प्रतिपन्नस्य १.७।४ खण्डस्य न तत्र निषेधः किं तु मुण्डे इति न तत्र व्यभिचार

---

१ पृष्टमिति २ पु॰ पा॰ ।

१.७।४ इत्याशङ्क्याह । नायं खण्ड इति । किं खण्डस्य केवलमुण्डे निषेधः, उत गोत्वोपाहिते? नाद्यः । अप्रसक्तेः । इह भूतले घटो नेत्यन्यत्र भूतलसंसृष्टतया प्रतिपन्नस्य स्मर्यमाणस्याऽन्यत्र निषेधो दृष्टो न च खण्डः कदा चिदपि मुण्डे प्रसक्त इति कथं निषिध्यते? । द्वितीये गोत्वोपहिते मुण्डे खण्डस्य निषेधसमये विशेषणीभूतगोत्वे निषेधः समाश्रितः स्यात्; यथेदमि प्रतिपन्नमिदन्तोपहितशुक्तिव्यक्तौ निषिध्यते तद्वत् । तथा च प्रतिपन्नोपाधौ निषिध्यमानविषयखण्डज्ञाने व्यभिचार इत्यर्थः । गोत्वमुपाधिर्यस्य व्यक्त्यन्तरस्य तद्गोत्वोपाधि, तस्मिन्निति विग्रहः । गोत्वमेवोपाधिर्गोत्वोपाधिस्तस्मिन्निति वा ।

१.७।५ अनुच्छिन्नव्यवहारत्वमुपाधिरिति चोदयति । तत्रेति । नायं खण्डो गौरिति निषेधप्रत्ययोत्तरकालमपि खण्डे गोव्यवहारो लक्ष्यते । न च तथा ब्रह्मसाक्षात्कारादूर्ध्वं मनुष्यत्वव्यवहार इत्यर्थः । साधनव्यापकत्वान्नायमुपाधिः साधु[1]रित्याह । तदहमिति । साक्षात्कारोत्तरकालमपि प्रारब्धकर्माऽनुरोधादहं मनुष्य इति व्यवहारदृष्टेः साधनव्यापकत्वेन प्रामाण्यं स्यादित्यर्थः ।

प्रारब्धकर्मसमाप्तेरूर्ध्वं व्यवहारस्योच्छेदान्न साधनव्यापकत्वमित्याशङ्क्याह । मोक्षेति । 'तत् केन कं पश्येत्' इति मुक्तौ सकलव्यवहारोच्छेदप्रतिपत्तेः कथमनुच्छेदः इत्याशङ्क्याऽस्मन्मते सर्वस्याऽबोधविलासत्वात्तद्ध्वंसे ध्वंसः[2] । तव तु समस्त-
१.७।६ स्य परमार्थत्वात् अनुच्छेद इत्याशयेनाह । तत्रेति । भिन्नाऽभिन्नविषयत्वमसिद्धमिति शङ्कते । जातिव्यक्तीति । अत्यन्त-

---

१ साधुरिति नास्ति २ पु० । २ तद्ध्वंस इति २ पु० पा० ।

भेदे ऽत्यन्ताऽभेदे[1] च जातिव्यक्त्यादिभावस्याऽसंभवात् भेदाऽभेदावित्यर्थः । तेषामभावादित्यस्यैषो ऽर्थः । न तावच्छरीरात्मनोर्जातिव्यक्तिता, उभयोर्द्रव्यत्वात् । अत एव न गुणगुणिभावः । नापि कार्यकारणता, शरीरस्य भौतिकत्वात् । नापि विशिष्टस्वरूपता, दण्डवैशिष्ट्यस्य चैत्रतन्त्रतावत् शरीरस्यात्मातन्त्रत्वात् । न चांशांशिता,आत्मनो निरवयवद्रव्यत्वादिति । किं तेषां मिलितानां प्रयोजकत्व,मुत प्रत्येकं? नाद्यो मेलनस्य क्वचिदप्यभावादिति चेतसि निधाय चरमं निरस्यति । तर्हि शरीरेति । न च प्रयोजकगौरवप्रसङ्गः, त्वयापि[2] तस्यैष्टव्यत्वा[3]दित्यर्थः । शरीरात्मनोर्भेदाऽभेदाऽनङ्गीकारे राद्धान्तविरोधो ऽपीत्याह । अन्यथेति । 'जातिव्यक्त्यादीनामन्यतमस्य प्रयोजकत्वमित्यभिनिवेशश्चेत्सोपि सुसंपाद इत्याह । अस्ति चेति । सकलस्य ब्रह्मकार्यत्वान्न जीवकार्यतेत्याशङ्क्य जीवस्य तदभेदात् जीवकार्यत्वमप्यस्तीत्याह । चेतनेति । असिद्ध्यादिदोषवैधुर्यादनुमानं निरवद्यमित्युपसंहरति । अत इति । अथ वा ऽसिद्ध्यादिदोषवैधुर्यालोचनयापि भ्रान्तित्वं प्रतिक्षिपति । अत इति[4] । १७।८

अहं मनुष्य इत्यादिप्रत्ययानां याथार्थ्यान्न भ्रान्तित्वमित्यवोचत्, संप्रति समवायिकारणपर्यालोचनयापि भ्रान्तित्वं प्रतिक्षिप्यते इत्याह । किं चेति । किं भ्रान्तिरन्तःकरणपरिणामः, १७।११
आहो आत्मपरिणामः? इति विकल्प्याद्यमनूद्य दूषयति । भ्रान्तिज्ञानमित्यादिना । मृज्जस्य घटस्य तन्त्वनाश्रयत्ववदात्मा-

1 भेदे ऽभेदे इति २ पु॰ पा॰ । 2 तथापीति २ पु॰ पा॰ ।
3 इष्टत्वादिति २ पु॰ पा॰ । 4 अथ वेत्यादिग्रन्थो नास्ति २ पु॰ ।

श्रयत्वमज्ञानस्यान्तःकरणपरिणामत्वे न स्यादित्यर्थः । जपाकुसुमलौहित्यस्य स्फटिकेषु स्फुरणवदात्मनि अज्ञानप्रतिभाससंभव इति शङ्कते । अन्तःकरणेति ।

भेदाऽभेदमते ऽध्यास एव न संभवतीत्यभ्यधायि, संप्रति
१.७।१४ तमङ्गीकृत्योत्तरमाह । तथापीति । भ्रान्तेरात्मसंबन्धः सन्,
असन् वा? न तावत्सत्त्वमित्याह । अन्यथाख्यातीति । नाप्यसत्त्व,मपरोक्षप्रत्ययानुपपत्तेरित्यर्थः। द्वितीयं प्रत्याह । न चेति । निरवयवद्रव्यत्वेन परिणामाऽयोग्यत्वादिति हेत्वर्थः । परिणामत्वमङ्गीकृत्य ज्ञानान्तराकारेण[1] परिणामो ऽयुक्त इत्याह । न चेति । सुप्तोत्थितस्य न किं चिदवेदिषमिति परामर्शात् ज्ञानमुन्नेयं, तच्च नित्यं करणविरमेपि भावात् । तथा चैकज्ञानाश्रयस्य ज्ञानान्तराऽऽकारेण न परिणतिरित्यर्थः । त्वन्मते ज्ञानस्य गुणत्व,मुत द्रव्यत्वं? नाद्य इत्याह । ज्ञानगुणस्येति । नित्यज्ञानगुणस्येत्यर्थः । प्रतिज्ञाते ऽर्थे हेतुमाह । एकस्मिन्निति । एकद्रव्याश्रितरूपरसाख्यगुणद्वयव्यावृत्त्यर्थमन्तरेति विशेषणम् । कटकाऽऽधारहेम्नः तदैव रुचकाकाराऽनाधारत्ववन्नित्य[2]ज्ञानाश्रयस्य ज्ञानान्तराश्रयत्वाऽनुपपत्तेर्द्रव्यत्वपक्षो ऽपि दुर्युक्तिक इत्यर्थः । भ्रान्तिज्ञानाऽसंभवेऽपि संस्कारो ऽग्रहणं वा
१.७।१८ किं न स्यादिति शङ्कामुपसंहारव्याजेन निरस्यति । तस्मा-
दिति । मिथ्याज्ञानाऽभावान्न तत्संस्कारसंभवः । नाप्यग्रहणं, ग्रहणस्य स्वभावतया तदभावाऽसंभवादित्यर्थः ।

कूटस्थे ऽज्ञानसंबन्धाऽसंभवमाशङ्क्याह । अनादीति ।

---

१ ज्ञानाकारेणेति २ पु॰ पा॰ ।

२ रुचकाऽनाधारत्वान्नित्येति १ पु॰ पा॰ ।

अथ वा ऽऽत्मन्यज्ञानाभ्युपगमे ज्ञानेन निरासो वक्तव्यः, स च न सम्भवति, धर्मान्यथात्वे आम्रफलवद्धर्मिण्यन्यथात्वप्रसक्तेरित्याशङ्क्य धर्मस्य समारोपितत्वान्नैवमिति परिहरति ।
अनादीति । इष्टाऽनिष्टसाधनज्ञानपूर्विके प्रवृत्तिनिवृत्ती, ते च १।७।१८
न सर्वसंकर[1]मते संभवतः, संकीर्णत्वात्सर्वस्येत्यादिदोषग्रहग्रस्तत्वाज्जीवनमपि दुर्लभमित्यभिप्रेत्योपसंहरति । अलमतिप्रसङ्गेनेति । अज्ञानस्योत्तरत्रापि साध्यमानत्वात्पौनरुक्त्यमित्याशङ्क्य परिहरति । अत्रेति । उत्तरत्र प्रमाणान्तरस्योच्यमानत्वान्न पौनरुक्त्यमित्यर्थः । प्रागसतो निमित्ताऽधीनसत्ताकत्वं नैमित्तिकत्वमिति द्वितीयं कल्पं निराकुर्वन्नज्ञानसाधनफलमाह । तत्रैवंभूतेनेति । टीकायामतःशब्दो मिथ्याज्ञाननिमित्त इत्यनेन संबध्यते, कार्यस्य सुषुप्त्यादौ कारणात्मना ऽवस्थितस्य पुनः समयान्तरे ऽभिव्यक्तिरतःशब्दार्थः ।

अनवभासहेत्वज्ञानाऽध्यासस्य प्राथम्यादहंकाराऽध्यासस्य कथं प्राथम्यमुक्तमित्याशङ्क्याह । निष्कलङ्केत्यादिना । अज्ञानाऽध्यासे ऽनादिसिद्धे ऽपि कादाचित्कमध्यासमाश्रित्य प्राथम्यमाहेति संबन्धः । अनवभासस्याऽऽगन्तुककलङ्कनिमित्तत्वं निराकर्तुमाद्यं विशेषणम् । अवभासहेत्वभावादनवभासं व्यावर्तयितुं चैतन्येति । निरंशे अंशस्य दुःखरागादेः स्वतो ऽसंभवात्तद्धेतुत्वेनापि अज्ञानाध्यास आश्रयणीय इत्याह । निरंशेति । बोधैकस्वरूपे ऽज्ञानादेः स्वतो ऽसंभवादध्यस्तत्वं वक्तव्यमित्याह । अज्ञानादीति । संशयादिरादिशब्दार्थः । १।७।२५

अहमित्यत्र ग्रन्थे अंशान्तराभावमाशङ्क्यांशान्तरं सम-

---

[1] संस्कारेति १ पु॰ पा॰ ।

र्थितं, तदसंगतं, पूर्वपक्षसिद्धान्ताऽनुपयोगादित्याशङ्क्यांशान्त-
१८।१ रनिरसनमध्यासाऽभावोपयोगीत्याह । नन्विदं रजतमिति ।
अंशान्तरासिद्धावध्यासासिद्धिरिति सिद्धान्तप्रयोजनमाह । यथे-
ति । वक्ष्यतइति । अहंकारटीकायामित्यर्थः । अहंकाराऽध्यास-
माश्रित्य शरीराऽध्यास आक्षिप्तो नन्विदमित्यत्र, स नोपपद्यते,
तस्य जडत्वेनाऽहंकारसमानयोगक्षेमत्वादित्याशङ्क्य तात्पर्य-
माह । न त्वन्तःकरणेति । न केवलं पृथगुपलब्ध्यभावो ऽपि स्व-
भेदेनेत्याह । अध्यस्ततयेति । अधिष्ठानतत्त्वबोधापोह्यत्वादप्य-
ध्यस्तत्वं युक्तमित्याह । आत्मतत्त्वेति । 'न तस्य प्राणा उत्क्रा-
मन्ती'त्यादिषु लयश्रवणादित्यर्थः । ततो वैलक्षण्यमाह । शरीरं
पुनरिति । अध्यस्यमानमधिष्ठानसमानरूपाऽधिकृततयोपलभ्य-
ते, इदं त्वन्यथेत्याह । इदमिति । आरोपितस्य केवलसाक्षि-
वेद्यत्वं दृष्टं, तच्च नेत्याह । केवलेति । तत्र हेतुमाह । इन्द्रियैरि-
ति । इदम्यारोपितं रूप्यं न ततो ऽन्यत्रोपलभ्यते, इदं त्वन्य-
थेत्याह । उत्क्रान्तइति ।

किं च शरीरस्याऽऽत्मन्यध्यस्तत्वे तत्रैव लयः स्यात्, र-
शनापरिकल्पितसर्पादिवत् नान्यत्र, अन्यत्र च लयः श्रूयते
'पृथिवीं शरीर'मित्यत्र, अतोपि नाध्यास इत्याह । भूतेष्विति ।
अध्यस्तताप्रतीत्यभावे ऽपि कल्पितोपकरणत्वाच्छरीरादेः क-
ल्पितत्वमुक्तं, तदचारु, कल्पितोपकरणत्वस्याऽसिद्धेरित्याशङ्-
१८।६ क्याह । शरीरादीनि । शरीरादिपदार्थस्वरूपस्य तादर्थ्येन
सृष्टत्वात् स्वरूपेणापि मिथ्यात्वमनुमातुं शक्यतइति संबन्धः ।
तादर्थ्येन, आत्मार्थत्वेनेत्यर्थः । आत्मन आप्तकामत्वात्कथं
शरीरादेस्तदुपकरणत्वम्? तथा कल्पितोपकरणत्वं चोपेक्षितं
स्यादित्याशङ्क्य तादर्थ्येनेत्येतद्विवृणोति । मिथ्येति । मि-

ध्या चासौ कल्पितश्चेति मिथ्याकल्पितः, स च कर्त्ता च भोक्ता च प्रमाता च दोषसंयुक्तश्चात्मा चेति तथोक्तः । ज्ञानबाध्यत्वं मिथ्याशब्दार्थः । समारोपितत्वं कल्पितपदार्थः ।

शरीरादेरात्मार्थत्वं प्रपञ्चयति । कार्यतयेति । कार्यतादीनां १८।१० कर्त्रादिभिर्यथाक्रममनुषङ्गः । विमतं कल्पितं कल्पितोपकरणत्वात्, स्वप्नप्राप्तच्छत्रादिवदित्यर्थः । छत्रादेरेव कल्पितत्वं नोपक्रियमाणस्येति दृष्टान्तवैषम्यमाशङ्क्य दृष्टान्तान्तरमुक्तं टीकायामिति द्रष्टव्यम् । ऐन्द्रियकत्वादेः स्वाप्नवदुपपत्तिः । 'पृथिवी शरीर' मित्यत्र शरीरस्य भूतेषु नाऽऽत्यन्तिको लयो निर्दिष्टः । तथाऽऽत्मोत्क्रान्तावपि शरीरोपलम्भो युक्तः । चिदधिष्ठानस्य तत्रापि भावादित्यर्थः । प्रयोजनस्यैवोपसंहरणादविवक्षितत्वं विषयस्येत्याशङ्क्योपलक्षणपरतया व्याचष्टे । तादृगिति । नित्यशुद्धादिलक्षणं वस्तु तादृक्पदार्थः । स चासावर्थश्चेति तदर्थः । स विषयो यस्याऽसौ तदर्थविषय इति विग्रहः । शङ्कां व्यावर्तयति ते एवेति । ब्रह्मात्मा चासावनुभवश्चेति तथोक्तः । अर्थशब्दस्य विषयवाचित्वं व्यावर्त्तयति । अर्थ इति ।

शास्त्रारम्भस्य सिद्धत्वादक्षरव्याख्यानमेव क्रियतामथशब्द आनन्तर्यार्थ इत्यादि किमाहेत्यादिनेतिशङ्कानिवृत्त्यर्थमाह. को ऽयमित्यादीत्युक्तम् । तत्राऽऽदिशब्देनाऽस्यानर्थहेतोरित्येतदप्युपात्तमिति शङ्कां निवारयितुमाह । सर्वलोकेति । १८।१८ आह कोऽयमित्यादेरध्यासपरत्वे एकेन भाष्येणाऽध्याससिद्धेः किं बहुभिरित्याशङ्क्याऽध्यासलक्षणादिपरत्वान्न वैयर्थ्यमित्युक्तं तत्रापीत्यत्र, तदनुपपन्नम्, अध्यासपरत्वं लक्षणादिपरत्वं चैकम्, उत नाना? । प्रथमे उत्तरवैयर्थ्यं, द्वितीये पक्षे परस्परपराहतिः,

१८।२० एकस्योभयपरत्वाऽनुपपत्तेरित्याशङ्क्याह । इदानीमिति । लक्षणादिना ऽध्यासस्य प्रतिपिपादयिषितत्वाल्लक्षणादवचनान्तरतात्पर्यमध्यासे महातात्पर्यमिति न व्याहतिरित्यर्थः ।

कथं पुनः प्रत्यगात्मनीत्यतः प्राक्तनं स्वरूपपरं, तदारभ्य संभावनापरमिति टीकार्थः । अन्यतःसिद्धाऽध्यासोपस्थापकत्वे ऽपि यथा तथापीत्यादिभाष्यस्यार्थवत्त्वं तद्वल्लक्षणादिभाष्यस्यापीत्याशङ्क्याह । लक्षणेति । तथापीत्यादेरध्यासानुवादेन विषयादिपरत्वादर्थवत्त्वं, न तथा ऽस्य लक्षणादिपरत्वात्, न च तद्युज्यते, अन्यत एव लक्षणादिसिद्धेरित्यर्थः । प्रमाणभाष्यस्याऽसंभाविताऽसंकीर्णबुद्धिजनकत्वाऽभावान्न लक्षणादि व्यर्थमिति चोदयति । किमिति । अर्थासंभावनादिबुद्धिजननाद्वैयर्थ्यमित्याह । तत्राहेति ।

अनिर्ज्ञातस्याऽसंभावितस्य च निर्णयो ऽनुपपन्न इति वदता लक्षणसंभावने अपेक्षिते इत्युक्तं स्यात्, तथा च विरोध इत्याशङ्क्य लक्षणादेरनपेक्षितत्वं न ब्रूमः, किं तु प्रमाणबलादेव तत्सिद्धिरित्याह । प्रमाणमिति । 'यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्ये'दिति व्यावृत्तिसंभावनयोर्निराकरणात्कथं संभावनादीत्याशङ्क्याह । स्वदेशेति । यद्यप्यात्मसाक्षात्कारादूर्ध्वं सर्वस्याऽसंभावितत्वादि तथापि व्यवहाराऽवस्थायां संभावितत्वादि घटतइत्यर्थः । प्रमाणसिद्धे ऽपि

१८।२५ संभावनादेः पृथगपेक्षादर्शनाल्लक्षणादिकमर्थवदिति शङ्कते । नन्वनुमानादीति । प्रत्यक्षकार्यलिङ्गेन कारणमात्रप्रतिपत्तौ तद्विशेषत्र्यणुकपरमाण्वादिषु यथा लक्षणादिकमर्थ्यमानं दृष्टमित्य-

---

१ रूपत्वेति २ पु॰ पा॰।

र्थः । ननु प्रत्यक्षदृष्टे[1] ऽपि धरित्र्यादौ लक्षणाद्यपेक्षादर्शनाद-ध्यक्षाऽनुभवनिर्णये विशेषतो दुःसंपादमिति कथमुक्तं? तत्राह । विशेषत इति । सामान्यतोदृष्टे लक्षणाद्यपेक्षायामप्यसाधारणा-१८।१८ ऽऽकारेण व्यावृत्ततया दृष्टौ नान्याऽपेक्षेत्यर्थः.।

प्रमाणभाष्येणाऽहंममाभिमान एव सिध्यति नाऽध्यास इति कथं? तयोरैक्यादित्याशङ्क्य समुदायतात्पर्यमाह । तत्रेति । तत्र प्रमाणभाष्ये ज्ञानापनोद्यत्वमविद्यात्वं, प्रतिभासमात्रशरीरत्वं भ्रान्तिता, सत्यानृतमिथुनीकरणात्मकत्वमध्यासत्वं, सदसद्विलक्षणत्वं मिथ्यात्वम् ।

सिद्धान्त्याशयमजानानश्चोदयति । नन्वस्येति । निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति कात्यायनस्मरणात् कस्य हेतोरिति कस्माद्धेतोरित्यर्थः । गूढाऽभिसंधिरेव परिहरति । नाऽनुभवेति । प्रमाणे सत्यपि अनुभवो नेति व्याहतमिति चोदयति । ननु प्रमाणइति । मिथ्यात्वविषयं प्रमाणमेव नेति स्वाऽऽशयमाविष्करोति । प्रमाणेति । बाधे सति अध्यासाऽनुभवो भवतीति कथं? तस्याऽध्यासनिवर्तकत्वादित्याशङ्क्याह । बाधा- १९।१ ऽनुपपत्तिरिति । सत्यत्वे आत्मब्रह्मधाऽनुपपत्तेर्मिथ्यात्वमित्यर्थः । अहं मनुष्य इत्यादिप्रत्यक्षं प्रत्यक्षशब्दार्थः । विवादाध्यासितो व्यवहारोऽध्यासनिबन्धनः, व्यवहारत्वात्, पश्वादिव्यवहारवदित्यनुमानम् अनुमानशब्दार्थः । प्रमातृत्वादिव्यवहारो व्यवहारशब्दार्थः । 'अष्टवर्षं ब्राह्मणमुपनयीते'त्यादिरागमः ।

१ आत्मन्यनात्माऽवभासिप्रमाणस्य बाधपुरस्कारेण प्रवृत्त-

---

१ निर्णीते इति २ पु० पा० ।

त्वाच्च प्रमाणान्तराऽपेक्षा मिथ्यात्वइति चोदयति । नन्विहापीति । अन्यस्याऽन्यात्मताप्रतिपत्तौ विवेकप्रतिपत्तिर्नापेक्ष्यते
१.१।८ ऽनुपयोगादित्याशङ्क्य उपयोगमाह । अन्यथेति । बाधाभावे इतरेतरविवेकाऽप्रतिपत्तेरितरेतराऽवभास एव न सिद्ध्येदि-त्युक्तं, तस्य कः समाधिरित्याशङ्क्याह । यौक्तिकेति । न चैतावतैव मिथ्यात्वसिद्धेः प्रमाणान्तरं व्यर्थमित्यपि शङ्क्यम् । अपरोक्षभ्रमस्याऽपरोक्षप्रत्ययं विना ऽनिवृत्तेरित्याशयेनाह। अपरोक्षबाधस्येति । बाधकप्रत्ययं विना मिथ्यात्वाऽसिद्धिश्चेत, स एव सम्पाद्यतां किं लक्षणेनेत्याशङ्क्याह। अत इति। लक्षणमेव वक्तव्यमित्यस्याऽयमर्थः। न प्रमाणमात्रेणाऽलं किं तु लक्षणेनापि भवितव्यमिति । प्रसिद्धाऽध्यासलक्षणे ऽभिहिते तल्लक्षणव्याप्तत्वादहंममाभिमानो ऽप्यध्यास इति सेत्स्यति, ततश्च बाधकप्रत्यय इति तदुपयोगितया लक्षणं कथ्यतइत्यर्थः।

लक्षणमङ्गीकृत्य संभावनामाक्षिपति । तर्हि लक्षणेति । संभावनां विना निर्णयाऽसिद्धेः सापि वक्तव्येति शकङ्कायामाह। प्रमाणेनेति। प्रामाणिकस्याप्यसंभावनया ऽपोद्यत्वमुक्तं टीकायां, तत्कथम्? असंभावितत्वे प्रामाणिकत्वाऽनुपपत्तेः।प्रामाणिकत्वे वा ऽसंभावितत्वाभावादित्याशङ्क्य द्वयमप्यनुभूयतइति परिहरति ।सत्यपीति। नीरन्ध्रे सवितरि निर्दुष्टकरणस्य कथं
१.२।१७ सुषिरप्रतिभास? इत्याशङ्क्याऽदृष्टवशादित्याह। औत्पातिक इति। भविष्यदनिष्टमुत्पातस्तत्सूचक औत्पातिक इत्यर्थः। असंभावनया प्रामाणिकस्याप्यपवादवत् प्रमाणेनाऽसंभावना ऽप्यपोद्यमाना दृष्टा, तद्वत्किं न स्यादिति चोदयति। ननु प्रमाणेनेति।

१ न सिध्यतीति २ पु॰ पा॰ ।

असंभावनाबाहुल्यादसंभावनया प्रामाणिकस्याप्यपवादो युक्त इत्याह । असंभावनेति । १९।१८

अविषय इत्यत्र विषयशून्यत्वमुच्यते, विषयत्वराहित्यं वा । नाद्यः, शब्दादेर्भावान्तेतरो ऽस्मत्प्रत्ययविषयत्वादित्यत्राह । अधिष्ठानस्येति । अविद्यादिसङ्गित्वादसाङ्गित्वमसिद्धमित्याशङ्क्याह । द्रष्टृव्यतिरिक्तस्येति । अध्यासनिमित्तस्यानन्दादेः स्वरूपस्य गुणस्य चाऽङ्गीकृतेः केन चिदित्याद्यनुपपन्नमित्याशङ्क्याह । अधिष्ठानेति । चैतन्यस्याधिष्ठानत्वान्न तन्मात्रज्ञानमारोपविरोधि इदमाकारज्ञानवदित्यत आह । अधिष्ठानेति । सामान्यविशेषभावेन भेदात्सामान्यज्ञानमविरोधि, विशेषज्ञानं तु विरोधि, न तथा ऽत्र, सामान्यादिभेदाभावादित्यर्थः । अविषयादिरूपात्मन्यनधिगते ऽसंभावनाबुद्धिं, उताऽधिगते? इति विकल्प्योभयथा ऽप्यसंभवं इत्याह । नन्वात्मनीति । द्वितीयं पक्षमादायोत्तरयति । नैतत्सारमिति ।

अधिगते ऽध्यास एव न तिष्ठतीति यदुक्तं तदेव विवेचनीयम् । अविषयादिरूपात्मनि किं परोक्षतया प्रतिपन्ने ऽध्यासनिवृत्तिः, उत अपरोक्षतयेति विकल्प्य आद्ये नाऽनुपपत्तिरित्याह । आत्मनीति । परोक्षतया ऽवभासस्या'ऽध्यासाऽविरोधित्वान्नाध्यासनिवर्तकत्वं, ततश्चाऽसंभावनाबुद्धिः स्यादित्यर्थः । द्वितीयस्त्वङ्गीक्रियतइत्याह । अपरोक्षेति । उक्तत्वादिति । यतो ज्ञानमज्ञानस्यैव निवर्तकमित्यत्रेत्यर्थः । संभवस्य प्रकृतत्वात्तच्छब्देन संभवपरामर्शः शङ्क्यते, न च संभवाति, तच्छब्दस्य नपुंसकत्वादित्याशङ्क्य परिहरति । तत्र त्रितयमिति । लक्षणादीनामन्यत- २०।७

१ परोक्षावभासस्येति १ पु॰ पा॰ ।

मस्यापि वैयर्थ्याऽभावात्तल्लक्षणादित्रितयमप्युच्यतइत्यर्थः । स्मृ-
२०।= तिरूप इत्यत्र लक्षणमेवोच्यते नेतरे इत्याशङ्क्याह । क्रमे-
णेति । किंशब्दस्याक्षेपे प्रश्ने च प्रयुज्यमानत्वात्स किमर्थ इति
न ज्ञायते, तत्राह । किंवृत्तस्येति । किंशब्दादुपरि वृत्तः किं-
वृत्तः, तस्येति यावत् । उभयत्र प्रयोगे ऽप्येकस्मिन् वाक्ये नै-
कस्य शब्दस्योभयार्थत्वं यथा गोशब्दस्याऽनेकत्र प्रयोगे ऽप्ये-
कस्मिन् प्रयोगे ऐकार्थ्यनियमस्तद्वदित्याशङ्क्याह । उभयस्येति ।
अध्यास इत्युक्ते सामान्यज्ञानात्प्रश्नः, आत्मनीत्युक्ते विशेष-
ज्ञानादाक्षेप इत्यर्थः । तन्त्र्यते व्युत्पाद्यते ऽनेनेति तन्त्रशब्दः शा-
स्त्रवाची, किं वा तन्त्र्यतइत्यर्थवाची? आद्ये तन्त्रशब्दस्य व्य-
र्थता, द्वितीये ऽसंभवः, अर्थेन वाक्योच्चारणाऽयोगादित्याशङ्क्-
याह । तन्त्रेणेति । आग्नेयाद्यनेकोपकारकत्वेन सकृत्प्रयाजा-
द्यनुष्ठानवत् प्रश्नाक्षेपार्थद्वयविवक्षया सकृदुच्चारणमित्यर्थः ।

प्रश्नाऽऽक्षेपयोर्विषयं दर्शयति । लक्षणेति । प्रश्नोत्तर-
स्योच्यमानत्वात्प्रश्नार्थः किंशब्द इति शङ्कते । उभयत्रेति । अ-
त्रोभयं विवक्षितं चेत्, प्रतिवचनसमये संभावना किं न प्रद-
र्श्यतइति संबन्धः ।

न तावदयमेकान्तेनाऽविषय इत्यत्र संभावना प्रादर्शीत्या-
शङ्क्याह । प्राथमिकइति । प्रथमदर्शने हेतुर्नोक्त इति आशङ्क्या-
ह । स्वरूपमिति । परोक्तेः प्रयोजनं पृच्छति । न त्वाहेति । वा-
दकथात्वद्योतनार्थं परोक्तिरिति वक्तुं शास्त्रस्य वादरूपतामा-
ह । वादेति । तत्र हेतुमाह । अर्थनिर्णयेति । अर्थनिर्णयः प्र-
धानमुद्देश्यं यस्य तदर्थनिर्णयप्रधानं, तस्य भावस्तत्त्वं तस्मा-
दित्यर्थः । अर्थनिर्णयपरत्वमात्रेण कथं वादत्वमिति शङ्कायां
२०।। तत्स्वरूपमाह । तत्रेति । कथा त्रिविधा, वादो जल्पो वितण्डा-

श्चेति, तासां कथानां मध्ये वादः प्रदर्श्यते । पक्षश्च प्रतिपक्षश्चेति पक्षप्रतिपक्षौ, तयोः परिग्रहो यस्मिन्नसौ तथोक्तः । तावत्युक्ते जल्पवितण्डयोः प्रसङ्गः, तदर्थं प्रमाणतर्केति । प्रमाणं च तर्कश्चेति प्रमाणतर्कौ, ताभ्यामेव स्वपक्षस्थापनं परपक्षोपालम्भश्च यस्मिन् स तथा निर्दिष्टः । जल्पवितण्डयोस्तु छलजातिनिग्रहैरपि साधनोपालम्भो ऽत्र तु न तथेत्यर्थः ।

सिद्धान्ताऽविरुद्ध इत्युक्त्या अपसिद्धान्तनिग्रहप्रवेशमाह ।
पञ्चावयवेति । विशेषणेन न्यूनाधिक्योक्त्या ऽसिद्ध्यादिहेत्वा- २०।१७
भासानां प्रवेशः सूचितः । यद्वा स्वमतसाधनपरकीयसाधनदूष-
णस्वपरसाधनदूषणसमर्थनाऽपशब्दादिशब्ददोषलक्षणैः पञ्चभि-
रवयवैर्युक्त इत्यर्थः । भवत्वेवं वादस्वरूपं, प्रकृते तु कि-
मायातमिति वीक्षायामाह । वादीति । एवंभूत इति । दुरधिग-
मवस्तुविषय इत्यर्थः । स्वरूपविषयत्वेन प्रश्नोत्तरस्य प्राथम्यं
चेत् तर्ह्यनवसरदुःस्थोऽयमाक्षेप इति कस्मान्नोक्तवानित्याशङ्क्य
एवं कथने श्रोतुः कुण्ठितमतितया प्रतिवचनार्थप्रतिपत्तिर्न स्या-
दित्यभिप्रायेणैवं प्रतिवचनमित्युक्तम् । तेनाऽऽक्षिप्तमित्यनेन त-
त्राऽऽक्षेपप्रश्नयोरुभयोरपि कृतत्वादाक्षिप्तं पृष्टमिति मत्वा इ-
त्येतदयुक्तमित्याशङ्क्याऽध्याहारेण टीकां व्याकरोति । तेनेति ।
आक्षिप्तमपि पृष्टमेवेति मत्वा प्रत्युक्तमित्यन्वयः । आक्षेपस्या-
पि विद्यमानत्वात्कथं पृष्टमेवेति मननमित्याशङ्क्याह । आक्षेप-
रूपमिति । अभिप्रायमजानतेवेत्यध्याहारः । श्रोतर्यनवबोधा-
ऽऽरोपणे तस्याऽनुचितकारित्वबुद्ध्या प्रतिवचनाऽप्रतिपत्ते-
रात्मन्यनवबोधारोपणमित्यर्थः । प्रश्नस्यापि स्वाऽभिप्राय-
त्वात्कथं स्वाऽभिप्रायं विवृणोतीत्युक्तमित्याशङ्क्याह । पुन- २०।१८
रसाविति । यद्यप्याक्षेपः प्रश्नश्चाऽभिप्रेतः पुरा तथापि प्रश्न-

प्रतिवचनानन्तरमाक्षेपोत्थानमित्यर्थः । परोक्तेर्वादकथात्वद्योतनार्थत्वमिति कथं नियमो? ऽन्यत्रापि परोक्तेः संभवा[1]दिति चोदयति । ननु शास्त्रेष्विति । अर्थनिर्णयपरे ग्रन्थे परोक्तेरे-
२०।१८ तदेव फलमित्याह । नेत्याहेति ।

अध्यासस्वरूपे पृष्टे स्मृतिरूपः परत्र पूर्वदृष्टाऽवभास इति तत्स्वरूपकथनमित्यधिगन्तुं शक्यते, ततश्च प्रश्नवाक्येति टीकावैयर्थ्यमाशङ्क्याह । ननु लक्षणेति । आकाङ्क्षाद्यनुसारेण पदानामन्विताऽभिधायित्वादध्यासपदाऽभावे साकाङ्क्षत्वेनाऽऽनर्थक्यात्पूर्ववाक्यपदाऽध्याहारेणाऽन्विताभिधानग्राह्यमित्यर्थः । अव्याप्त्यादिदोषाऽभावादार्थिकमपि विशेषणं कस्मादुपादीयते? ततस्तत्रेतिटीकानुपपत्तिमाशङ्क्याह । ननु परस्येति ।

व्याकरणविरोधान्न स्मृतिशब्दस्य कर्मपरतेति शङ्कते । ननु घञादीनामिति । भावे इति सूत्रेण भावे घञादिविधानवदकर्त्तरि च कारके इत्यनेन कर्मादौ घञादिविधाने ऽप्यकर्तरि च कारके संज्ञायामित्यत्र कर्तृव्यतिरिक्तकारके संज्ञायां घञादिप्रत्ययस्य विहितत्वात्[2] स्मृतिशब्दस्य न योगवृत्त्या कर्मपरत्वमित्यर्थः । कर्मणि भावे वा विशेषेण घञादयो वृद्धैः प्रयुज्यन्ते, को भवता दायो दत्तः, को भवता लाभो लब्धः, तथा पाकस्त्यागो राग इति व्याकरणस्य वृद्धप्रयोगमूलत्वात्स्मृ-
२०।२५ तिशब्दस्य कर्मपरत्वं युक्तमिति समाधत्ते । तत्राहेति । सूत्रस्य तर्हि का गतिरित्याशङ्क्याह न कर्तृव्यतिरिक्तेष्विति । भावे ऽकर्त्तरि च कारके संज्ञायामिति सूत्रद्वयमधिकृत्य स्त्रियां क्तिन्निति सूत्रे-

१ सद्भावादिति २ पु॰ पा॰ ।

ण भावे[1] कर्तृव्यतिरिक्ते च कारके संज्ञायामिव अकर्त्तरि चेति "चशब्दात् संज्ञायामिवाऽसंज्ञायामपि[2] घञादिर्विधीयते इति न सूत्रविरोध इत्यर्थः ।

स्मृतिरूप इत्यत्र रूपशब्दस्य वैयर्थ्यं शङ्कते । ननु २१।३ स्मर्यतइति । किंशब्दः प्रश्नार्थ, आक्षेपार्थो वा । आद्यं प्रत्याह । अस्मर्यमाणेति । अस्मर्यमाणरजतादौ स्मर्यमाणेन योपमा तत्समासार्थ इत्यर्थः । द्वितीयमनुवदति । ननु किमुपमेति । संस्कारोत्थबोधविषयत्वादिति शेषः । किं संस्कारोत्थबोधविषयत्वमात्रं हेतुः, उत संस्कारमात्रजबोधविषयत्वम्? आद्ये प्रत्यभिज्ञाविषयेण व्यभिचार इत्यभिप्रायेण दूषयति । नेत्याहेति । द्वितीयमुत्थापयति । ननु चक्षुरादीति । अनुभवविरोधेनोत्तरयति । नेत्याहेति ।

पुरोवच्छिन्नत्वाऽवभासनादित्यसंबद्ध,मिदमो गृह्यमाणत्वात् रजतस्य च स्मर्यमाणत्वादित्याशङ्क्याह । यथेति । सम्यक्स्थले इदं रजतमिति सामान्यविशेषयोः संसृष्टयोरपरोक्षतया स्फुरणवद् भ्रान्तावप्युभयोरपरोक्षतया स्फुरणात्तद्विरुद्धं समारोपितस्य स्मर्यमाणत्ववचनमित्यर्थः । अपरोक्षसामान्याऽविवेकाद्रजते ऽपरोक्षव्यवहारः न संसर्गसंविदस्तीत्याशङ्क्य प्रतिभासकृतवैलक्षण्यमाश्रित्य संसर्गसंविन्निह्नूयते, अथ वा ऽर्थाऽभावादिति विकल्प्य प्रतिभासवैलक्षण्यमसिद्धमित्याह । न हीति । द्वितीयमनुवदति । अर्थाभावइति । भविष्यदादिज्ञा- २१।११ नमर्थाभावेप्यस्ति, तदर्थमाह । अपरोक्षेति ।

---

१ भावे. इति नास्ति २ पु॰ ।

२ चशब्दात् संज्ञायामपीति २ पु॰ पा॰ ।

किमेतद् व्युत्थितस्य चोद्यम्, आहो विनेयस्ये?ति विकल्प्या-
२१।१०ऽऽद्यं दूषयति । न यथेति । संविदमनतिक्रम्य[1] वर्त्तमानो ऽव-
भासो यथासंविदवभासस्तदधीनत्वादिति विग्रहः । अर्थसत्ता
कुत इति पृष्टे तदनुभवादिति वक्तव्यम्, ततश्चाऽर्थसंविदि
सत्यामर्थो नेत्यतिसाहसमित्यर्थः । निरालम्बनज्ञानाऽयोगादर्था-
ऽधीनः संविन्निश्चय इत्याशङ्क्य किं संविन्निश्चयात्पूर्वमर्थसत्ता-
निश्चयेन भवितव्यमिति ब्रूषे, किं वा ऽर्थसत्तया भवितव्य?मिति
विकल्प्याऽऽद्यं दूषयति । न हीति । अर्थसत्तायां निश्चितायां
संवित्सत्तानिश्चय इति पक्षे ऽर्थसत्तानिश्चय एव न सिद्ध्येदिति
हिशब्दार्थः । कुत? इति चेत्तत्र वक्तव्यं किमर्थसत्तानिश्चयः
स्वतः, आहो स्वविषयसंविद्बलात् ? नाद्यो जडत्वादित्यभिप्रेत्य
द्वितीयं प्रत्याह । अर्थसत्तेति । स्वविषयसंविन्निश्चयो ऽपि स्वतः,
किं वा ऽर्थनिश्चयाऽधीनः ? आद्ये ऽस्मदभिहितसिद्धिः । द्वितीये
ऽर्थनिश्चयस्यापि स्वतो ऽनुपपत्तेस्तद्विषयसंविदन्तरादिति व-
क्तव्यम्, ततश्च पूर्वा[1]ऽर्थनिश्चयाऽधीन उत्तरोत्तरसंविन्निश्चयो
न सिद्ध्येदित्यर्थः ।

अर्थनिश्चयाऽधीनः संविन्निश्चय इति पक्षे निराकृत्याऽर्थ-
सत्ताधीनः संविन्निश्चय इति पक्षमुत्थापयति । ननु नेदमिति ।
पुरोवर्तिनि रजतस्य निषिध्यमानत्वात्तदसत्त्वं, तदसत्त्वे[2] च सं-
विदसिद्धिरित्यर्थः । विपरीतं किं न स्या?दित्याह । न तत्रेति ।
उत्तरसंवेदनइत्यर्थः । प्रथमोत्पन्नतया ऽसंजातविरोधित्वेन प्राब-
२१।१ ल्यमाह । पूर्वेति । निरपेक्षतया प्राबल्यमाह । सद्भावेति । नेदं

१ पूर्वपूर्वेति २ पु॰ पा॰ ।

२ निषिध्यमानत्वात्तदसत्त्वे चेति २पु॰ पा॰ ।

रजतमिति संसर्गः संवेद्यतइत्याशङ्क्य यथेदंरूप्ययोः संसर्गसंविदमन्तरेणाऽविवेकात्संसर्गव्यवहारः तद्वदत्रापीत्याह । इदं- २१।१७
रजतेति । इदं च रजतं चाऽभावश्चेति इदंरजताभावास्तेषां संवेदनानि तथोक्तानि, तेषामिति विग्रहः । व्यवहारविसंवादादिदंरजतयोः संसर्गसंविदभावनिश्चयः, उत्तरज्ञाने तु तद्विपरीत्यान्नैवमिति चोदयति । व्यवहारेति । रजताऽभावज्ञानप्रयुक्तो व्यवहारो व्यवहारशब्दार्थः । संसर्गज्ञानं संवादज्ञानाधीनमिति वदतः सिद्धान्तक्षतिरित्याह । नार्थक्रियेति । स्वसमवेतं ज्ञानं स्वस्य स्वयं प्रकाशकमिति पक्षस्याऽर्थक्रियासंवादलिङ्गेन संसर्गसंवित्सत्त्वानुमितौ विरोधः स्यादित्यर्थः ।

संविदो ऽनुमेयत्वमङ्गीकुर्वाणं प्रत्याह । अर्थक्रियेति । संवित्सत्त्वमर्थक्रियासंविदधीनं, तत्सत्ता कुत? इति पृष्टे संविदन्तरादिति वक्तव्यं, संवित्सत्ता च संविदन्तरादिति पूर्वा[1]ऽसिद्धावुत्तरोत्तराऽसिद्धेर्न व्यवहारादिसिद्धिरिति स्वत एव संविन्निश्चय इति वक्तव्यम्, तथा च तद्बलादर्थसत्त्वं वक्तव्यमिति नाऽर्थाभावसिद्धिरित्यर्थः । व्युत्थितचोद्यं निराकृत्य द्वितीयमुत्थापयति । ननु संप्रतिपन्नइति । तत्रेति शेषः । किं प्रतिभाससमये ऽर्थाऽभावसंप्रतिपत्तिः, उत कालान्तरे? नाद्य इत्याह । न यथेति । यथाप्रतिभासं रजतस्योपगमादित्यन्वयः । रजतस्य सत्त्वे कथं ज्ञानंनिरस्यते?त्याशङ्क्याह । उत्तरेति । निरसनयोग्यत्वमाह । मिथ्येति । परमार्थसद्वैलक्षण्यं मिथ्याशब्दार्थः । २१।१८
द्वितीयस्त्वङ्गीक्रियतइत्याह । एवेति ।

प्रतिभाससमकालीनो ऽर्थ उपगतश्चेत् कथं तर्हि कालत्र-

१ पूर्वपूर्वेति २ पु॰ पा॰ ।

यसंबन्धिसत्तानिषेधः? इत्याशङ्क्याह। लौकिकेति। परमार्थरजत-
२१।१८ स्याऽप्रसक्तेः कथं तन्निषेध? इत्याशङ्क्याह'। दृष्टेति। रजता-
ऽऽभासप्रसक्त्या परमार्थरजतस्यापि बुद्धिस्थत्वात् अत्र प्र-
तिषेधः, सामान्योपाधौ प्रसक्तस्य घटस्य निषेधवद्दित्यर्थः।
उक्तव्यवस्थायाः किं कल्पकं?मित्याशङ्क्य संविद्द्वयमेव कल्पक-
मित्याह। संविद्द्वयेति। इतीत्यस्य व्यवस्थासिद्धेरित्यनेन संब-
न्धः। संविद्द्वयाऽनुपपत्तिर्व्यवस्थाकल्पिकेत्यर्थः। अनयोः
प्रत्यययोरेका संवित् त्यज्यतां, तथा च नाऽलौकिककल्पनेत्या-
शङ्क्याह। अन्यतरेति। अपह्नवाऽयोगे हेतुमाह। तथा
चेति। यथा ऽन्यतरसंविदपह्नवाऽयोगस्तथोभयसंविदनुभवस्त-
तो नान्यतराऽपलाप इत्यर्थः। नात्र रजतमिति कालत्रया-
ऽसत्त्वं प्रतीयते, मिथ्यैव रजतमभादिति भ्रान्तौ सत्त्वं, तत-
श्चोभयसंविदनुरोधेन कालत्रयनिषेधस्य लौकिकाविषयत्वं सदि-
रजतमित्यनुभवस्य मायाविवर्त्तरूप्यविषत्वमित्यर्थः।

पुरोवर्तित्वाऽवभासनमन्यथोपपन्नमिति चोदयति। न परो-
क्षेति। अविवेकादित्यत्र रजतस्मरणस्येति द्रष्टव्यम्। निरस्त-
मपि चोद्यं टीकारूढं कर्त्तुं पुनरुपस्थापितमिति द्रष्टव्यम्।
अनुभवविरोधान्मैवमित्याह। नेत्याहेति। पुरोऽवस्थितत्वाऽव-
भासनाऽतिरिक्तं स्पष्टशब्दार्थं न विद्मः। तथा च पौनरुक्त्य-
मित्यभिप्रायेणाह। केयमिति। भ्रान्तिसमये पुरोदेशसंसृष्टतया
रजतस्य स्फुरणं पुरोऽवस्थितत्वाऽवभासनं बाधकज्ञानोत्तरका-
लमिदमा संसृष्टतया ऽनुसंधीयमानत्वं स्पष्टशब्दार्थ इति विभा-
२१।२३ गमभिप्रेत्याह। विवेकेति। बाधकज्ञानोत्तरकालं संसृष्टतया
प्रत्यभिज्ञायमानत्वमात्रात् कथं प्राक्संसृष्टतया प्रतिभासः? इ-
त्याशङ्क्याह। अन्यथेति। अनुभूतविषयत्वात्परामर्शस्य संस-

ग्रस्य चाऽननुभूतत्वात् न तद्विषयपरामर्शसंभव इत्यर्थः । स्पष्ट-
शब्दस्यार्थान्तरमाह । अथ वेति । संसर्गज्ञानस्य संसर्गप्रवृत्ति- २ १।२५
निमित्तता स्पष्टतेति कुतो? ऽग्रहादपि संसर्गप्रवृत्तिसंभवादित्या-
शङ्कयाह । पदार्थेति । नियममेवाह । तज्ज्ञानादिति । यो यत्र
प्रवर्त्तते ऽसौ तज्ज्ञानादिति प्रसिद्धं, रजतार्थी चेदमि प्रवर्तते,
तस्मात्पुरोवर्ति द्रव्यं रजततया ज्ञात्वा प्रवर्तते इत्यवश्याऽऽश्र-
यणीयमित्यर्थः ।

पूर्वदृष्टाऽवभास इत्यादेरयमर्थः । रजतस्य पुरोवर्तितया
भासमानत्वे कथं स्मर्यमाणरूपत्व?मित्याशङ्कयाह । पूर्वदृष्टेति ।
शुक्त्यविद्यया तत्र झटिति प्रादुर्भवतः कथं पूर्वदृष्टत्वं घटते?
इत्याशङ्कय, पूर्वदृष्टसदृश इत्येवंपरतया व्याकरोति । न हीति ।

स्मर्यमाणसदृशो ऽन्यस्याऽन्यात्मना ऽवभासमानो ऽध्यास इत्ये-
वंलक्षणस्वीकारे ज्ञानस्याऽध्यासत्वमुपेक्षितं स्यादित्याशङ्कय
ज्ञानाऽध्यासपरत्वेन लक्षणं व्याचख्यौ, तदनुपपन्नं, ज्ञानार्थयो-
रन्यतरस्याऽध्यासत्वे इतरस्याप्यध्यासत्वं सेत्स्यति किं पृथक्
लक्षणोपन्यासेने?त्याशङ्कयाह । यदेति । यद्यप्यर्थज्ञानाऽध्यास-
योरन्यतरनिर्देशे ऽन्यतरसिद्धिः तथाप्यर्थाऽध्यासलक्षणस्य ज्ञा-
नाध्यासे ऽसंभवेनाऽव्याप्तिः स्यात्तदर्थं पृथक् निर्देष्टव्यमित्यर्थः ।
तर्हि लक्षणान्तरमेव कथ्यतां, कस्मादेतदेव तत्र योज्यते? इत्या-
शङ्कय लाघवादित्याह । तदेवेति । अवभासस्यापीदमेव लक्ष-
णमित्यर्थादुक्तं भवति यतस्ततो न ज्ञानाध्यासस्योपेक्षितत्व-
मिति योजना । अर्थादित्यत्र कस्याऽनुपपत्तिरिति न ज्ञायते,
अत्राह । वाक्येति । कथमित्यादेरयमर्थः । २२।

अर्थाऽध्यासलक्षणं कथं ज्ञानाध्यासलक्षणं स्यात्? न
ह्यन्यलक्षणमन्यलक्षणं भवतीति चोदयति । कथमिति । अ-

न्यलक्षमन्यलक्षणमिति न ब्रूमः, अपि तु अन्यलक्षणवाक्यम् अन्यलक्षणपरतया[1]पि योजयितुं शक्यते इत्याह। तदुच्यत इति। योजनामेवाह। स्मृतेरिति। स्मरणं स्मृतिः, तस्या रूपमिव रूपमस्येति। स्मृतिरूपत्वं कस्मात्संस्कारजन्यत्वेन स्मृतित्वमेव किं न स्यादित्याशङ्क्य व्यभिचारान्नेत्याह। न पुनरिति।

संस्कारमात्रजन्यत्वेन स्मृतित्वशङ्कां निरस्यति। पूर्वेति। स्मृतिजनकसंस्कारस्य यन्मूलं तत्पूर्वशब्देनोच्यते। पूर्वं च तत्प्रमाणं चेति पूर्वप्रमाणं, तस्य यो ऽयं विषयविशेषः तस्य पूर्वाऽनुभवसंभिन्नतया ऽनवभासकत्वादित्यर्थः। पूर्वाऽनुभवसंभिन्नतया ऽनवभासकस्य स्मृतिरूपत्वमप्यनुपपन्नं प्रत्यक्षवदिति चोदयति। कथमिति। वैधर्म्येणो[2]त्तरयति। पूर्वेति। प्राक्प्रवृत्तं प्रमाणं द्वारं मूलं यस्य संस्कारस्य स तथोक्तः, तस्मात्समुत्पन्नत्वा[3]दित्यर्थः। अस्मृतित्वे संस्कारजन्यत्वमप्यनुपपन्न-
२२।७ मिति चोदयति। नन्विति। विमतं न संस्कारजन्यमस्मृतित्वात् प्रत्यक्षवदित्यर्थः। अनुमानादौ व्यभिचारान्नायं हेतुः साधुरित्याह। संप्रयोगेति। प्रत्यभिज्ञायां संस्काराऽजन्यत्वप्रसङ्गं परास्यति। मात्रेति। व्याप्त्यादिसंस्कारे सत्यनुमानादिज्ञानमन्यथा नेत्येवंलक्षणावन्वयव्यतिरेकौ। चक्षुष्यन्यसंप्रयुक्ते यदन्यविषयं ज्ञानमुत्पद्यते सा स्मृतिरिति कथमनुमानादौ व्यभिचारादित्याशङ्क्याऽभिप्रायं विवृणोति। ननु संस्कारेति। अधिष्ठानज्ञानं व्यावर्तयितुमन्यविषयत्वमित्युक्तम्। अनुमानं व्यावर्तयति। अनन्तरमिति।

---

१ अन्यपरतयेति २ पु० पा०। २ वैधर्म्येणेति २ पु० पा०।
३ समुत्पन्नत्वादिति २ पु० पा०।

संस्कारजन्यत्वस्य त्वयाप्याश्रितत्वात्तेनैव[1] भ्रान्त्युत्पत्तेर्न कारणमन्तरं मृग्यमित्यभिप्रेत्याह । संस्कारेति । अनन्तरपद- २२।११ व्यावर्त्यमाह । तद्व्यवधानेनेति । व्याप्तिस्मृतिव्यवधानेनेति यावत् । फलितमाह । इतीति । संस्कारोत्थज्ञानस्य प्रमाणस्मृतिरूपत्वेन द्वैराश्यमित्यर्थः ।

संस्कारोत्थज्ञानं द्विविधमेवेति कथं नियमः? अयथार्थप्रत्ययस्यापि संभवादित्याशङ्क्याह । न तृतीयमिति । ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात् प्रमात्ववदित्यर्थः । अथ वा अयथार्थप्रत्ययासिद्धेः कथं तदपलापः? इत्याशङ्क्याह । प्रमाणेति । तत्सद्भावे प्रमाणाऽभावात् प्रसिद्धेरन्यथाप्युपपत्तेर्नैतदित्यर्थः । प्रकारव्यावर्त्यमाह । न तृतीयमिति । विमतं स्मृतिः संस्कारमात्रजत्वात्संमतवदित्यनुमानं विवक्षितं, तत्र विपक्षे बाधकतर्कपरीहार्ति शङ्कते । ननु स्मृतिरिति । अपुनरुक्तशब्दद्वयस्मृतिहेतुत्वेन रजतं विविक्तं प्रतीयतएवेत्याशङ्क्याह । स्मरामीति । अप्रमुषितस्मरणाभिमानस्याऽस्मरणस्य विवेचकत्वमस्य च तद्वैपरीत्यान्नैवमित्याह । अत आहेति । संस्कारस्य सदा भावात्सदा स्मरणं स्यादिति शङ्कते । ननु शुक्तिकेति । शुक्तिकासंप्रयोगे रजतं किमिति स्मर्यते संप्रयोगात्पूर्वोत्तरकालयोरस्मरणं कुस्मादिति योजना ।

सादृश्यसंदर्शनसमुद्बुद्धसंस्कारस्य पूर्वोत्तरक्षणयोरभावादस्मरणमिति शङ्कते । सदृशादिति । तथापि रजतं कस्मा- २२।१४ त्स्मर्यते, अन्यदेव कस्मान्न स्मर्यते? इत्याह । अतिसादृश्यादिति । रागादीनामपि संस्कारोद्बोधकत्वेऽन्तर्भावान्नाऽतिप्रसङ्ग इ-

[1] तत एवेति २ पु० पा० ।

त्याह । नेत्याहेति । स्मर्यते ऽनेनेति स्मृतिः संस्कारस्तस्य समुद्बोध इति यावत् । समुद्बोधकस्यागन्तुकत्वे हेतुमाह ।
२२।१७ इन्द्रियादीनामिति । आदिशब्देन विषयप्रमातारौ गृह्येते । रागसादृश्यकाचादिर्दोषशब्दार्थः ।

स्मरणस्याऽविवेचकत्वे ऽपि पुरोवर्तिद्रव्यसंयुक्तेन्द्रियेण विशेषांशस्फुरणसंभवान्नाऽविवेक इति चोदयति । ननु मा भूदिति । विशेषांशे प्रतिबन्धसंभवा[1] न्नयनस्य न तद्भासकत्वमित्याह । नेत्याहेति । विवादाध्यासिता प्रवृत्तिः पुरोवर्तिरजतज्ञानपूर्विका रजतेच्छाऽधीनपुरोवर्तिप्रवृत्तित्वात् सम्यग्रजतप्रवृत्तिवदित्यनुमानादयथार्थप्रत्ययसिद्धिरिति शङ्कते । नन्विति । विपक्षे बाधकाऽभावादप्रयोजकत्वमाशङ्क्य किं ज्ञानद्वयं प्रवर्तकम्, उत प्रत्येकम्? आद्ये ऽपि किं संभूयोत्पन्नं प्रवर्तकम्, उत क्रमेणे[2]ति विकल्प्याद्यं निरस्यति । स्मृतिग्रहणयोरिति । मनसः क्रमकारित्वनियमादुत्पन्नयोश्च स्मृतिग्रहणयोः क्षणिकत्वान्न यौगपद्यमित्यर्थः ।

२२।२० क्रमपक्षं निरस्यति । क्रमवर्तित्वइति । इदमाकारज्ञानस्य रजतज्ञानव्यवहितत्वान्न प्रवृत्तिहेतुत्वम् अव्यहितपूर्वक्षणवर्तिनो हेतुत्वनियमादित्यर्थः । द्वितीये ऽपि किमिदं ज्ञानं प्रवर्तकम्, उत रजतज्ञानं? नोभयथापीत्याह । न चेति । इदमाकारज्ञानात् रजतार्थिनो न शुक्तौ प्रवृत्तिर्लोष्टादावपि तत्प्रसक्तेः । नापि रजतमात्रज्ञानात्, देशान्तरेपि प्रवृत्तिप्रसङ्गात् । तस्मात् संसर्गज्ञानाऽभावे प्रवृत्त्यसंभवस्य बाधकत्वात्तदाश्रयणीयमिति चोद्यार्थः । संसर्गज्ञानाभावेन प्रवृत्त्यसंभवे चोदिते प्रवर्तकं किं

---

१ सद्भावादिति २ पु॰ पा॰ ।

चिद् वक्तव्यं, न च तदुच्यतइत्यसंगतिमाशङ्क्य निरन्तरोत्पन्नयोरित्यनेन प्रवर्तकमुक्तमित्याह । निरन्तरेति । अन्तरं २२।२१
व्यवधानं, तद्राहिततयोत्पत्तिर्यस्य बोधस्याऽसौ निन्तरोत्पत्तिरित्यर्थः । इदंज्ञानादव्यवधानोत्पन्नं रूप्यज्ञानं प्रवर्तकमिति यावत् ।

संसर्गप्रत्यये प्रत्यभिज्ञा प्रमाणं, तद्विरुद्धो हेतुरिति चोदयति । नन्विति । प्रत्यभिज्ञानमन्यथापि घटते इति परिहरति । नेत्याहेति । एकत्वज्ञानाभावेप्येकत्वज्ञानं जातमिति अविवेकाद्व्यवहार इत्यर्थः । संस्कारमात्रजन्यत्वहेतोरर्भकतिक्तस्मृतावसिद्धिः शङ्किता, सा ऽनुपपन्ना, इह जन्मन्यनुभवाऽभावे ऽपि जन्मान्तरे तिक्तरसस्याऽनुभूतत्वेन हेतोः संभवादित्याशङ्क्याह । जन्मान्तरेति । जन्मान्तरे ऽनुभवसंभवे ऽपि जन्ममरणव्यवहितत्वान्न तस्य स्मृतिजनकत्वमिति शबरस्वामिवचनादित्यर्थः[1] । न केवलमाप्तवचनादेव जन्मान्तराऽनुभूतस्मृत्यभावः किं त्वनुभवादपीत्याह । अस्मर्यमाणत्वादिति ।

इह जन्मन्यनुभवाऽभावे ऽपि जन्मान्तराऽनुभूतत्वात्तिक्तस्मरणमित्युक्तं, तन्न संगच्छते, आप्तवचनविरोधात् कल्पकवैधुर्याच्चेत्याशङ्क्य न तावदाप्तवचनविरोधः तस्य प्रायिकाभिप्रायत्वादिति सिद्धान्तयति । जन्मान्तरेति । आस्वाद्य थूत्कृत्य गुडादेस्त्यागदर्शनं तिक्तस्मृतेः कल्पकमित्यर्थः । अननुभवशङ्काऽनुत्थितेरन्यथेत्याद्ययुक्तमित्याशङ्क्य जन्मादिव्यवहितत्वात् जन्मान्तराऽनुभवस्याऽनुपकारकत्वमुक्तं निरस्यतइत्याशयमाह । जन्मेति । अन्यथेति । जन्मान्तरीयस्याऽनुभ- २३।१

---

१ वचनार्थं इति २ पु॰ पा॰ ।

वस्याऽनुपकारकत्वइत्यर्थः । अनुभूतत्वाऽविशेषइति । अनुभूतत्वं नास्ति यस्य तदननुभूतत्वं तस्मादननुभूतत्वाद्नुपकारकत्वेन विशेषाभावसाम्ये इत्यर्थः । तत्र षड्रसाऽतिरिक्ते रसत्वाऽनुभवः स्यादित्यतिप्रसङ्गः । अननुभूतस्मरणपक्षे ऽतिप्रस-
२३।२ ङ्गवदनुभूतस्मरणे ऽप्यतिप्रसङ्गः सम इत्याह । किमितीति । नियामकाऽभावो ऽसिद्ध इत्याह । दोषेति । दोषात्स्मरणमित्यत्राप्यतिप्रसङ्गः सम इत्याह । किमितीति । तिक्तस्मरणकार्यलिङ्गेन दोषस्य तिक्तस्मारकत्वमेव कल्प्यतइत्याह । अत आहेति ।

अयथार्थज्ञानाश्रयणे सिद्धान्तक्षतिरिति शङ्कते । नन्वतत्त्वइति । शास्त्रकारेणेति । सांख्येनेत्यर्थः । अयथार्थज्ञानाभावे ऽपि तद्व्यवहाराऽभिप्रायं तद्वचनमित्याह । नेत्याहेति । कल्पनागौरवाद्प्ययथार्थज्ञानं नोपेयमित्याह । वक्तव्य इति । प्रत्ययथाथार्थ्ये भ्रान्त्यनुपपत्तिर्बाधिकेत्याह । उच्यतइति ।

अख्यातिर्भ्रम इत्युक्तं, तत्राह । केयमिति । किं ख्यात्यभावो ऽख्यातिः, किं वा तदन्यः, उत तद्विरुद्ध इति किंशब्दार्थः । आद्यं प्रत्याह । न तावदिति । कतिपयख्यात्यभावस्य भ्रमत्वे ऽतिप्रसक्तिः, सकलख्यात्यभावपक्षे सुषुप्त्यादावपि भ्रमत्वप्रसङ्ग इत्यर्थः । द्वितीये ऽपि किमयथार्थव्यवहारहेतुर्ज्ञानमख्यातिः, उताऽविविक्ताऽनेकपदार्थज्ञानमख्यातिरिति विकल्प्याऽऽद्यमुत्थापयति । अन्यार्थिन इति । अन्याप्त्या दूषयति । यत्रेति । वीतरागादीनां व्यवहाराऽभावान्न तद्धेतुर्ज्ञानमस्तीत्यर्थः । रागिणामपि प्रवृत्तिमन्तरेण बाधकसंदर्शनान्न तद्धे-
२३।१० तुर्ज्ञानमस्तीत्याह । झटितीति । द्वितीयमुत्थापयति । अथाऽविविक्तेति । ज्ञानमात्रस्य भ्रमत्वं निराकर्त्तुमविविक्तेति विशेषणम् । तावत्युक्ते वस्तुमात्रज्ञाने ऽतिप्रसक्तिस्तदर्थमनेकेति ।

अविविक्तत्वं किं भेदेनाऽस्फुरितत्वम्, उतैक्यम्? इति विकल्प्य आद्ये ऽव्याप्तिमाह । तर्हीति । द्वितीयं दूषयति । न चेति । २३।१२
अनभ्युपगमे हेतुमभिधत्ते । भेदेति । अवमर्शेन ज्ञानेनेत्यर्थः । किं च किं भेदः पदार्थस्वभाव, उत धर्मः? नाद्य इत्याह । विविक्तेति । पदार्थप्रतिपत्त्या भेदोऽपि प्रतिपन्न इति नाऽविवेक इत्यर्थः । द्वितीयमुत्थापयति । इतरेतरेति । वैधर्म्यादिर्भेदशब्दार्थः । तद्रहितता ऽविविक्ततेति शेषः । अतिव्याप्तेर्नैतत्साध्वित्याह । गामानयेति । कर्मकरणभावेन विवेकप्रतिपत्तेः कथमविवेक? इत्याशङ्क्याह । तत्कारकत्वयोरिति । गोदण्डगतकर्मकरणकारकत्वयोरित्यर्थः । तत्र लक्षणाऽप्रवृत्तेः कथमतिव्याप्तिः? इति शङ्कते । तत्रापीति । कर्मकरणप्रतिपादकविभक्तिद्वयबलाद् भेदः प्रतीयतइत्यर्थः । साम्येन समाधत्ते । इदमितीति । एतदेव व्यतिरेकमुखेनाह । अन्यथेति ।

विवेकाऽप्रतिपत्तावपि तस्य विद्यमानत्वादिदं रजतमिति प्रतिभाससंभव इत्याशङ्क्याह । नेदमिति । इदमाकाराद् रजतस्य व्यावृत्तताप्रतिपत्तौ विलक्षणशब्दानुविद्धतया तयोः स्फुरणं न स्यादित्यर्थः । किं भासमानयोरविवेक, उताऽभासमानयोः? नाद्य इत्याह । किं च प्रतीयमानेति । अपुनरुक्तप्रतिभासादिति । अपुनरुक्तशब्दद्वयाद्विवेकस्य प्रतिभासादित्यर्थः । द्वितीयं प्रत्याह । अप्रतीयमानेति । सुषुप्तादावपि प्रसङ्गादित्यर्थः । सामान्यतः प्रतिपन्नयोर्विशेषतश्चाऽप्रतिपन्नयोर्विवेकाऽग्रहणं भ्रम इत्याशङ्क्याऽभावाऽनङ्गीकारादग्रहणमेव न संभवतीत्याह । तस्मादिति । ख्यातिविरुद्धा ऽख्यातिरिति २३।२०
पक्षे उत्तरज्ञानस्य पूर्वज्ञानाविरोधित्वाद् भ्रमत्वप्रसक्तिस्तथा ज्ञानप्रागभावस्यापीत्यर्थः ।

किं चाऽविविक्ताऽनेकपदार्थज्ञानमात्रं भ्रमः, आहो ग्रहणस्मरणात्मकं, किं वा संसर्गज्ञानाऽसहकृतत्वविशेषम्, अथ वा बाधकज्ञानविषयीकृतत्वाऽत्यन्ताभावाऽनधिकरणत्वविशेषि-
२३।१० तमिति विकल्प्याऽऽद्यमतिव्याप्त्या निरस्यति । किं च स्व-ण्ड इति । द्वितीयमव्याप्त्या दूषयति । न च ग्रहणेति । गृह्य-माणयोरविवेको गृह्यमाणाऽविवेकस्तस्येत्यर्थः । तृतीयमुत्था-पयति । सामान्येति । सम्यक्स्थले संसर्गज्ञानसंभवात्तद्रहितता-विशेषितं लक्षणं न वर्तते ततः कथमतिव्याप्तिरित्यर्थः ।

सामान्यविशेषादौ वैधर्म्यमात्रं तेनोक्तमिति मत्वा लक्षण-स्याऽतिव्याप्तिस्तदवस्थेत्याह । तथापीति । न वैधर्म्यमात्रं, किं तु संसर्गज्ञानरहितत्वविशेषिताऽविविक्तज्ञानं भ्रम इति नाऽति-व्याप्तिरित्याशङ्क्य विशिष्टलक्षस्यापि तत्र वृत्तेरतिव्याप्तिरि-त्याह । न च तत्रेति । संसर्गप्रत्ययस्य किमैक्यमालम्बनम्, उत गुणगुण्यादिसम्बन्धः, किं वोभयम्? नाद्यः, अत्यन्तभेदवादि-त्वादित्याह । ऐक्यस्येति । द्वितीयमुत्थापयति । गुणगुणीति । जातिव्यक्त्यादिरादिशब्दार्थः । गुणगुण्यादिसंबन्धस्य ना-ऽऽलम्बनत्वनियमो व्यभिचारादित्याह । न च प्रत्यभिज्ञाया इति । तृतीये गुणगुण्यादिसंबन्धाः किं मिलिता आलम्बनम्, उत प्रत्ये-कम्? नाद्यः, मेलनस्य क्वचिदप्यभावात् । द्वितीये गुणगुण्या-दिवत् सादृश्यसम्बन्धोऽप्यालम्बनं स्यादित्याह । इहेति ।
२४।१ ततश्च लक्षणाऽसंभव इत्यभिप्रायः । चतुर्थं प्रत्याह । अस्ति चे-ति । अख्यातिमते विवेकज्ञानं बाधकं ततश्च बाधकज्ञानविषयी-कृतत्वात्यन्ताऽभावाऽनधिकरणत्वमपि तत्रास्तीत्यातिव्याप्तिरि-त्यर्थः ।

ग्रहणस्मरणाऽविवेको भ्रम इत्यत्र दोषान्तरं समुच्चिनोति ।

तइत्यन्वयः। ऐक्ये ऽपि तस्य जाड्येनाऽनवभासः संभवत्यविद्यां
१४।२१ विना ऽपीत्यत्राह। स्वयंप्रकाशत्वइति।

अहमित्युपलब्धाकाराद्ब्रह्मणो व्यतिरेकाऽभावात्तदनवभासो ऽसिद्ध इत्याशङ्क्य सर्वज्ञसर्वशक्त्यनवच्छिन्नानन्दात्मकब्रह्माऽनवभासार्थमविद्या ऽऽश्रयणीयेत्याह। सर्वज्ञत्वइति। अन्यथोपपत्तिं परिहरति। अन्यथेति। आच्छादकाभावे ऽनवभाससिद्ध्यर्थं तयोर्भेद उपेय इत्याह। भेदेति। श्रुतिविरोधात् भेदाऽनुपपत्तिश्चेत्तर्ह्यात्मनो जाड्यमाश्रयणीयमित्याह। जाड्ये इति। स्वयंज्योतिष्ट्ववचनविरोधाज्जाड्याऽसंभवश्चेत्तर्हि न सर्वज्ञत्वादिलक्षणं ब्रह्मेत्याह। किंचिज्ज्ञत्वेति। एवं सत्यग्रहणमेवाऽविद्या स्यादित्याह। ग्रहणेति। ततः किमित्यत आह। ततश्चेति।

अविद्यावच्छिन्नजीवनिर्भासाऽऽस्पदं ब्रह्मेति कथमुपसंह्रियते? तस्याऽप्रस्तुतत्वादित्याशङ्क्य तद्व्यावर्त्यामाशङ्कामाह। नन्विति। जीवब्रह्मविभागानिरूपणमकाण्डताण्डवितमित्यत्राह। सत इति। तत्र मतान्तराण्युपन्यस्यति। अन्तःकरणेति। भेदाऽभेदव्यवहारसंपादनपटीयान् धर्मविशेषो ऽतिरेकः। काल्पनिकांशांशिभावव्यावर्तनार्थं स्वभावादिति विशेषणम्। अविद्यावच्छिन्नताया अनुपपादनात्कथमुपसंहरणमित्यत्राह। आत्माऽऽवरणेति। पूर्णात्माऽऽवरकत्वात्तदज्ञानमेवाऽध्यासोपादानत्वयोग्यं यस्मादतस्तदेवाऽवच्छेदोपादानमिति युक्तमुपसंहरणमित्यर्थः। जनकत्वमात्रं निमित्तशब्दार्थः।

अवच्छेदस्य स्वभावे तदुपादानत्वं, तदेव कुतस्त्यमित्याशङ्क्य
४४।५ याह। अवच्छेदस्येति। प्रातिभासिकेति हेतुगर्भविशेषणम्। अध्यस्यतइत्यध्यासः। विमतमारोपितं दृश्यत्वात् शुक्तिरूप्यवत्। ततो ऽज्ञाननिमित्तत्वमित्यर्थः। अप्रयोजकत्वं निरस्य

ति । सत्यत इति । साऽवयवदार्वादेर्विदारणदर्शनान्निरवयवे ४४।८
ब्रह्मण्यपि वस्तुतो विदारणाऽसंभवो बाधक इत्यर्थः । अन्तःक-
रणस्याऽऽगन्तुकत्वान्नावच्छेदकत्वं, किं त्वज्ञानस्येति प्रतिपा-
दयितुमनादिसिद्धेत्युक्तम् । तत्र हेतुमाह । कर्तृत्वेति । न के-
वलं कर्तृत्वादेरनादित्वात्तदुपादानेनादित्वं किं तु विभागा-
ऽनादित्वादपीत्याह । अनादीति ।

किं चान्तःकरणमवच्छेदकमिति वदन् प्रष्टव्यः किं तद्वा-
स्तवावच्छेदस्य हेतुः, उत काल्पनिकस्येति । तत्राऽऽद्यं प्रत्याह।
न चेति । अद्वैतश्रुतिविरोधान्न परमार्थतो विदारणमित्यर्थः ।
कथं तर्हि तत्प्रतिभास इत्याशङ्क्याह । अवच्छेदस्येति । द्वि-
तीयं दूषयति । अज्ञानस्येति । किं च किमन्तःकरणमपि ता-
त्त्विकमुताऽतात्त्विकमिति विकल्प्याऽऽद्यं दूषयति । अन्तःक-
रणस्येति । 'षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति'
'भिद्यते हृदयग्रन्थि'रित्यादिवाक्यादन्तःकरणस्य ज्ञाननिरस्य-
ताऽवसीयते। ज्ञाननिरस्यत्वं चाध्यस्तत्वं विना नेति न तात्त्वि-
कत्वमित्यर्थः । चरमं निरस्यति । स्वकारणेति । अन्तःकर-
स्याऽवच्छेदकत्वमिच्छता ज्ञानस्याप्यवच्छेदकत्वमिष्यतएव अ-
न्तःकरणस्यारोपितत्वेनाऽज्ञानात्मकत्वात् तत उभयोरवच्छेद-
कत्वकल्पनायां गौरवान्न तावदज्ञानमेवाऽवच्छेदकमित्यर्थः ।
'तन्मनोऽकुरुते'त्यादिश्रुत्याऽन्तःकरणस्य ब्रह्मजत्वात्सत्यत्वं
लक्ष्यते, अतः सत्यमेवाऽवच्छेदकमित्याशङ्क्य कूटस्थत्वेन सा-
क्षात्करणतासम्भवात्तद्रूपेण विवर्तमानाऽविद्याधिष्ठानत्वं का-
रणत्वमिति न सत्यत्वमन्तःकरणस्य । तदङ्गीकृत्य परिहरति ।
सत्यत्वेऽपीति ।

अवच्छेद्यवदन्तःकरणस्याप्यनादित्वात् अवच्छेदकत्वं यु- ४४।१२

क्तमित्याशङ्क्य किं तत्सुषुप्तिप्रलयादौ अस्ति, उत नेति वि-
४४।११ कल्प्य चरमं निरस्यति । सुषुप्तादाविति । घटभङ्गे तदुपहित-
गगनस्य महागगनात्मकत्ववदवच्छेदकविलये जीवस्य ब्रह्मता
स्यादित्यर्थः । आद्यमुत्थापयति । तदा ऽपीति । किं निर-
वयवतापत्तिः सूक्ष्मता, आहो अवयवाऽपायमात्रम्, उत कार-
णात्मना ऽवस्थानं, किं वा कार्यसंस्कारसहितशक्तिमत्कारणा-
ऽवस्थान॑मिति विकल्प्याऽऽद्यं प्रत्याह । न तावदिति । तन्त्व-
पगमे पटाऽपगमवदवयवाभावे च सत्यन्तःकरणमपि न स्या-
दित्यर्थः । द्वितीयमनूद्य दूषयति । अथाऽवयवेत्यादिना । आ-
रम्भकाऽवयवध्वंसे ऽप्यवयविनो ऽवस्थाने तस्य तत्कार्यत्वं ही-
येतेत्यर्थः । तृतीयमुत्थापयति । कारणात्मनेति । अत्यन्ताऽभे-
दमाश्रित्याऽऽद्यः कल्पः द्वितीयस्तु भेदाऽभेदावनुसृत्येति द्रष्ट-
व्यम् । चतुर्थः पक्षः परिशिष्यतइत्याह । तस्मादिति । अस्त्वेवं
ततः किमिति चेत् । तत्र वक्तव्यं किं कारणशब्देन परमार्थव-
स्तु विवक्षितम् उताऽज्ञानम्? आद्ये न कदा चिन्मोक्षः, पर-
मार्थस्य निवृत्त्यसंभवात् । द्वितीये प्राप्ताऽप्राप्तविवेकेनाऽज्ञाना-
वच्छेदकं स्यादित्यभिसंधायोपसंहरति । अत इति । अतिरेक-
पक्षेपि वक्तव्यं किमतिरेकः पारमार्थिकं भेदं संपादयति, उता-
ऽपरमार्थिकम॑इति । नाद्यः । श्रुतिस्मृतिन्यायविरोधादित्य-
भिप्रेत्याऽद्वितीये रशनासमारोपितसर्पादौ हेतुत्वेनाऽनाद्यविद्या-
या एव विभागहेतुत्वसम्भवे ऽप्रसिद्धमतिरेकं किं कल्पयसी-
त्याह । क्लृप्तेति ।

अविद्याया अवच्छेदकत्वाऽनुपपत्तेरतिरेकः कल्प्यतइति
४४।११ शङ्कते । जीवस्येति । पूर्वमित्यत्र स्वसम्बन्धादित्यध्याहारः ।
अविद्याया विभागोपजीवित्वेनोपजीव्यत्वाऽनुपपत्तेर्विभागस्या-

नि । सुखेति । तुल्यमेतदित्याह । इष्टापीति । जीवपक्षपातित्वा- च्चिन्मात्रतन्त्रत्वमयुक्तमित्याह । कथं पुनरिति । पक्षपाति- त्वं कथापि घटनइत्याह । दर्पणेति । दर्पणादेः प्रतिबि- म्बादौ स्वगतधर्मसंसर्गजनकत्वं पक्षपातित्वमित्यर्थः । प्र- कारान्तरेण चिन्मात्रसम्बन्धित्वमाक्षिपति । नन्विति । कू- टस्थाऽसङ्गाद्वयबोधरूपत्वाच्चितो ऽविद्याश्रयत्वमयुक्तमित्यभि- सन्धिः ।

चिन्मात्राश्रयत्वाऽनुपपत्त्या विशिष्टाश्रयत्वं मनुषे, आहो चित्यनुपपत्तिमात्रं, किं वा स्वातन्त्र्यम्, उत तस्या असत्त्व?- मिति विकल्प्याऽऽद्यं प्रत्याह । न तावदिति । प्रमाणाऽभावः कथमिति चेत्तत्र वक्तव्यं किं प्रत्यक्षं प्रमाण,मुताऽनुपपत्तिरिति विकल्प्याऽऽद्यमनुवदति । नन्विति । किं प्रतिभासमात्रं प्रमाणम्, उत युक्तिसहकृताऽनुभव? इति विकल्प्याऽऽद्यं दूषयति । ना- हमिति । अहमनुभवामीत्यत्र प्रतिपत्तेरित्याध्याहारः । इष्टाप- त्तिशङ्कां निरस्यति । चैतन्येति । अनुभवस्य चित्प्रकाशत्वा- द्विशिष्टस्य च तद्विपरीतत्वादाधारादिभावो न युज्यते इत्यर्थः । अनुभवामीति प्रत्ययस्याऽन्यथासिद्धिं शङ्कते । ननु यथेति । दग्धृत्वस्य दहनधर्मतया ऽन्यत्र दृष्टत्वात्तस्याऽयःपिण्डे दग्धृत्व- व्यपदेशः, तद्वदनुभवधर्म्यात्मसम्बन्धादन्तःकरणेनुभवितृत्व- प्रथेत्यर्थः । मुख्यार्थे बाधकाभावान्नैवमित्याशङ्क्याह । नाऽन्तः- करणस्येति । करणस्याऽनुभववेद्यत्वान्न तदाधारत्वमित्यर्थः । तु- ल्यमुत्तरमित्याह । एवमिति । बाधकसद्भावादनुभवामीति प्र- त्ययस्यान्यथासिद्धिर्न तथा ऽत्रेत्याशङ्क्याह । नाऽन्तःकरण- स्येति । तत्र हेतुमाह । प्रतीतेरिति । अन्तःकरणस्याऽज्ञानकार्य- त्वान्न तदाश्रयत्वकल्पना । न च प्रतीत्यनुपपत्तिः । तस्या-

अन्यथासिद्धत्वादित्यर्थः । युक्तिसहिताऽनुभवस्य साधकत्वमिति कल्पं निरस्यति । आत्मनीति । न किं चिदवेदिषमिति ४९
परामर्शोऽनुपपत्त्या पुनरुत्थानाऽनुपपत्त्या च सुषुप्त्यादावविद्यासंबन्धो ऽधिगम्यते स न स्यादन्तःकरणाश्रयत्वे, तस्य विलीनत्वादिति युक्तिशून्यो ऽयं पक्ष इत्यर्थः ।

अर्थापत्तिः प्रमाणमिति पक्षमुत्थापयति । अथेति । विशिष्टं किं विशेषणविशेष्याभ्यामन्यत्, उताऽनन्यत्? तत्राऽऽद्यस्याऽप्रामाणिकत्वमभिप्रेत्य द्वितीयं प्रत्याह । न विशिष्टइति । दण्डदेवदत्तसंबन्धेषु विशिष्टशब्दप्रयोगाऽभावात्तदर्थान्तरमित्याशङ्क्याह । जडस्य चेति । यस्याऽज्ञानं भ्रमस्तस्य भ्रान्तिः सम्यक् च वेति स इति न्यायादज्ञानभ्रमसम्यग्ज्ञानानामेकाश्रयत्वे सम्यग्ज्ञानाश्रयतया मोक्षान्वयित्वं वक्तव्यम्, न च जडस्य कार्यस्य तत्संभवतीत्यर्थः । जडाश्रयत्वाच्चिदाश्रयत्वमप्यनुपपन्नमिति चोदयति । ननु स्वरूपइति । किं चिन्मात्रे ऽनुपपत्तिमात्रमुद्भाव्यते, उत विशिष्टाश्रयत्वं साध्यते? तत्राऽऽद्यमङ्गीकरोति । सत्यमिति । द्वितीयं दूषयति । अनुपपन्नेति । विशिष्टाश्रयत्वं ऽनुपपन्नोभयत्वं कल्प्यमस्मन्मते त्वेकाश्रयत्वमिति लाघवादनुपपन्नमपि चिदाश्रत्वमाश्रयणीयमित्यर्थः । एतेन चित्यनुपपत्तिमात्रमिति विकल्पोऽपि निरस्त इति द्रष्टव्यम् । विशिष्टाश्रयत्वे दूषणान्तरमाह । मोक्षेति । अज्ञानभ्रान्तिमुक्तीनामेकाश्रयत्वम्, अन्यथा ऽन्यो बद्धो ऽन्यो मुच्यते इति वैरूप्यप्रसङ्गः । ततश्च विशिष्टस्य मुक्त्यनन्वयाच्चिन्मात्रस्य च सर्वथाऽनुगमात्तस्यैवाऽज्ञत्वमित्यर्थः ।

विधान्तरेण जडाश्रयत्वं निराकर्तुं परमतमनुवदति । अत्र ५
कश्चिदिति । किमग्रहणादेरप्यन्तःकरणाश्रयत्वम्, उताऽनादिभावरूपाऽज्ञानस्यैव? तत्राद्ये ऽपीदं विचार्यमित्याह । स व-

-स्कन्ध इति । सर्वज्ञत्वस्याऽनुभवविरुद्धत्वात्किंचिज्ज्ञत्वमाश्रयणीयं, तदा च त्वन्मतानिर्वाहापत्तिरित्याह । किंचिज्ज्ञत्वइति । द्वितीयमुत्थापयति । अथेति । किं भावरूपाऽज्ञानस्य ज्ञानादन्यत्वेनाऽज्ञानत्वम्, उत तद्विरोधित्वेनेति विकल्पयति । किं तदिति । आद्यमनूद्य दूषयति । ज्ञानादिति । न निवर्त इति । अनात्माश्रय इति यावत् । द्वितीयमुत्थापयति । अथेति ।

किमन्तःकरणगतं ज्ञानं तद्विरोधि, उताऽऽत्मगतं? नाद्यः । तस्य जडत्वेन ज्ञातृत्वाऽनुपपत्तेः । न द्वितीयोऽपि । किं तदेकविषयम्, उत भिन्नविषयं? नोभयमपीत्याह । न भिन्नेति । चैत्रमैत्राभिन्नयोर्घटविषयज्ञानाज्ञानयोर्निवर्त्यनिवारकताऽनुपलब्धेस्तथा भिन्नविषययोरपि । तदेतदभिप्रेत्योक्तमपीति । करणगताज्ञानस्य कर्तृज्ञाननिवर्त्यत्वाभावाऽतिप्रसङ्ग इति चोदयति । करणाश्रयमिति । यस्य यत्करणं तदाश्रितज्ञानेन तत्करणगतस्याऽज्ञानस्य निवृत्तिः, किं वा करणान्तरगतस्य? नोभयथाऽपीत्याह । न प्रमाणेति । करणान्तरगतज्ञाननिवृत्तौ दूषणान्तरमाह । पुरुषान्तरेति । अन्तःकरणलयः कर्मनिमित्तः लयत्वात् संमतलयवदित्युत्पद्यमानबोधेन पुरुषान्तरगतेन सुषुप्तकरणगताऽज्ञाननिरासो नोपलभ्यते । अन्यथोत्थितस्य तत्परामर्शाऽनुपपत्तिप्रसङ्ग इत्यर्थः ।

अज्ञानस्य ज्ञाननिवर्त्यत्वं तावदसिद्धम् । तस्य करणायत्तत्वे प्रामाणिके तदज्ञाननिवृत्तिः सेत्स्यतीत्यभिसंधायाह । भ्रान्तीति । दोषत्वमुपपादयितुं भ्रान्तीति विशेषणम् । अज्ञानं करणाश्रयं विषयप्रमातृदोषाऽतिरिक्तत्वे सति दोषत्वात्काचादिवदित्यर्थः । अतिप्रसङ्गलक्षणबाधकतर्कपराहतत्वात्कार्यं हेतुरित्याह । न चक्षुरादाविति । विमतं नयनाश्रयं दोषत्वात् काचादिवदिति

अतिप्रसङ्गः । प्रलयसमये ऽप्यज्ञानस्य सद्भावात्तेषां चाऽभावा-
च्च तदाश्रयत्वमिति चोदयति । सादित्वादिति । अन्तःकरणस्या-
पि प्रलयादावुपरमान्नाऽज्ञानाश्रयत्वमित्याह । अन्तरा करण-
इति । तत्रान्तःकरणस्याऽव्यक्तात्मना सत्त्वादाश्रयत्वं युक्तमिति
शङ्कते । सत्कार्येति । तुल्यमेतदत्रापीत्याह । चक्षुरादाविति ।

युक्तिपर्यालोचनया जडस्याऽज्ञानाश्रयत्वं निरस्य श्रुतिप-
र्यालोचनयापि निरस्यति । अनृतेनेति । शब्दाश्रयेत्यस्य नाऽन्तः-
करणेत्यनेनाऽनुषङ्गः । स्वान्ताश्रयत्वएव शब्दस्य प्रामाण्यं किं
न स्यादित्याशङ्क्याह । प्राप्तज्ञानानामिति । सुषुप्तादौ ब्रह्म प्रा-
प्तानां तद्बोधाऽभावः कस्मादिति शङ्कायाम् आवरणसद्भावादि-
ति श्रुत्योच्यते, न च तत्तत्रोपपद्यते जडे ज्ञानप्रसक्त्यभावादि-
त्यर्थः ।

अज्ञानं स्वतन्त्रमिति कल्पमुत्थापयति । किं त्विति । स्वा-
तन्त्र्ये सत्तास्फूर्त्यो सत्त्वाच्चिदध्यस्तत्वमेष्टव्यमित्याह । चैत-
न्येति । अज्ञानासत्त्वपक्षं प्रतिक्षिपति । अलमतिविस्तरेणेति ।

भेदादिना जगतोऽनिरूपणात् अन्यथाऽनुपपत्तेरहमज्ञ इति
व्यवहारानुपपत्तेश्चाऽज्ञानमास्थेयमित्यर्थः । अन्तःकरणादीनां
भेदकत्वाऽनुपपत्तिन्यायः । न्यायस्य स्वातन्त्र्येण बोधत्वाऽसं-
भवादनुग्राह्यमानमाह । श्रुतिरिति । स्वयंज्योतिष्ट्वाविद्याया व्यु-
त्पादितत्वादाक्षेपाऽनुपपत्तिरित्याशङ्क्याह । स्वयंप्रकाशस्येति ।
ब्रह्म नाऽज्ञानविषयः भासमानत्वात् भासमानघटादिवत् इत्यु-
क्ते दृष्टान्तस्य साध्यवैकल्यं शङ्कते । नन्विति । व्यावर्तकं विशेष-
णमिति यावत् । ज्ञानस्याऽज्ञानव्यावर्तकत्वाऽसंभवादनधिगत-
स्य व्यावर्तकत्वं वाच्यं, ततश्च न साध्यवैकल्यमित्याह पूर्ववादी ।
ननु तर्हीति । विषयस्याप्यनधिगतो तत्र जानामीति व्यपदेशा-

नुपपत्तेरधिगतस्य व्यावर्तकत्वं, ततश्च साध्यवैकल्यमित्याह सि-
७ द्धान्ती । नाऽनवभासमानस्येति । अवभासमानस्याऽज्ञानव्याव-
र्तकत्वं व्याहतमित्याह । नन्ववभासमानस्येति ।

अवभासमानस्याऽज्ञानाविषयत्वं किं युक्त्यसहमित्युच्यते, किं वा तत्प्रतीत्यभाव? इति विकल्प्याऽऽद्यमङ्गीकिरोति । नाऽज्ञानेति । अलंकारत्वे हेतुः प्रतिभासमात्रेति । द्वितीयं दूषयति । प्रतिभासस्त्विति । ग्रन्थान्तरत्वसूचकाभावादेकग्रन्थशङ्कां निरस्यति । निरंशस्येति । अन्यात्मना सामान्यविशेषवत्त्वात्तत्र भानाभाने न तथाऽत्र स्वयं ज्योतिषीति समाध्यर्थः ।

भासमानस्याऽनवभासमानत्वं नेति वक्तुमशक्यम्, भासमाने ऽप्यात्मनि देहादिव्यावृत्तेरनुपलम्भेन तत्र व्यभिचारादित्युक्तं, तदसंगतं, यत्र भासते न तत्राऽवभासमानत्वं, यन्नभासते न तत्राऽनधिगतत्वमिति कथं व्यभिचार? इत्याशङ्क्य व्यभिचारं दर्शयितुमपरोक्षलक्षणमाह । संविदिति । अभिन्नइति स्वरूपभेदमाश्रित्योक्तम् । धर्मभेदमाश्रित्याह । तत्तन्त्रइति । भेदस्य धर्मत्वे धर्मिज्ञानमात्रेण कथमपरोक्षत्वमित्याशङ्क्याह । एवंति । धर्म्यापरोक्ष्ये भेदाऽप्रतीत्यदर्शनात्तस्याप्यपरोक्षत्वमित्यर्थः ।

आत्मनि प्रतीयमाने व्यावृत्तेरप्युपलम्भान्न व्यभिचार इत्युक्तं, तन्नोपपद्यते, भेदज्ञानसामग्र्यभावात्, तृतीयज्ञानस्य च भेदग्राहित्वादित्यत्राह । पदार्थेति । तृतीयज्ञानात् प्राक् भेदग्रहणाऽभावे असंकीर्णतया धर्म्यादिबोधाऽभावाद्भेदबोधो न स्यादि-
२१ त्यर्थः । फलितमाह । अत इति । एकतांज्ञानाद्भेदाऽनवभास इत्युक्तं, तदनुपपन्नं, भेदग्राहकग्रहणस्याप्युपपत्तेरित्याशङ्क्य देहव्यतिरिक्तात्मवादिना देहात्मबुद्धेरध्यासत्वं वा गौणत्वं वाऽभ्युपेयते। आद्ये ऽध्यासस्य भेदाग्रहव्याप्तत्वाद्ग्राहकाऽभावस्त्व-

याण्याश्रयणीय इत्याह । संसर्गेति । निमित्तं ज्ञापकमिति यावत् । तत्र हेतुमाह । इति सर्वत्रेति ।

ननु गौणो ऽयमित्यत्र देहात्मबुद्धेर्गौणत्वपक्षो ऽनूदितः स नोपपद्यते, गौणत्वव्यापकभेदग्रहाऽभावादित्याशङ्क्याह । पदार्थेति । व्यतिरेकप्रमाणाऽभावान्नैतत्सिद्धिरित्युक्तं नन्वहमित्यादिना, तन्नोपपद्यते, प्रस्तुताऽनुपयोगित्वादित्याशङ्क्य गौणत्वमुपपादयितुं तदित्याह । आहेति । अयो दहतीति दग्धृत्वस्य तन्निष्ठतया प्रतिभासे ऽपि दग्धृत्वस्याऽन्यधर्मत्वं यथा तद्वदित्याशङ्क्य किं प्रत्यक्षात् व्यतिरेकसिद्धिः, उताऽऽगमात्, अथ वा ऽनुमानात्? नाद्यो ऽनुपलम्भादित्याशयेनोक्तम् अन्यस्येति । संप्रति द्वितीयतृतीयावुत्थापयति । ननु प्रत्यक्षेति । तयोरप्रमाणत्वान्न तत्साधकत्वमित्याह । नेत्याहेति ।

प्रत्यक्षस्य मिथ्यात्वान्न बाधकमित्युक्तमयुक्तं, मिथ्यात्वस्यैवाऽसिद्धेः । न चाऽऽगमाऽनुमानविरोधान्मिथ्यात्वमिति शङ्क्यम् । प्रत्यक्षस्य ज्यैष्ठ्येन तद्बाध्यत्वाऽसंभवादित्याशङ्क्याह । ननु मिथ्यात्वादिति । ज्येष्ठस्य बाध्यत्वे दृष्टान्तमाह । द्विचन्द्रेति । कुत इत्यादावनुमानादेर्बाधकत्वं निरस्तं, नैतत् संभवति, एकश्चन्द्रो नायं सर्प इत्यादावनुमानादेर्बाधकत्वदर्शनादित्याशङ्क्य वैधर्म्यमाह । यत्रेति । प्रत्यक्षाऽवभासमिति । प्रत्यक्षवदवभासत इति प्रत्यक्षाऽवभासं द्विचन्द्रादीत्यर्थः । सर्पादिभ्रमनिवर्तनेन बाधकप्रत्ययोत्पादान्न तथात्वम्, अत्र युक्तितो बाध्यबाधकता निश्चेतव्या, न च निश्चेतुं शक्यते, परस्पराश्रयतापातादित्यर्थः । कुत इत्यादेरेषो ऽर्थः । प्रत्यक्षस्य मिथ्यात्वं न संभवति, बाधकाभाभावात् । न चागमादेर्बाधकत्वमितरेतराश्रयत्वप्रसक्तेरित्याशयेनोक्तं कुत इति । यथाश्रुतमादायाह सिद्धान्ती । आगमादिति । अन्यथा-

ऽवगमादिति। भिन्नतया ऽवगमादित्यर्थः। देहः स्वाऽतिरिक्तद्रष्टृको दृश्यत्वात् घटवदित्याद्यनुमानम्। "अशब्दमस्पर्शमरूपमव्ययं" "न जायते म्रियते" इत्यादिरागमः।

स्वाऽऽशयमाविष्करोति। नैतदिति। तथा सति स्यादित्यर्थः। देहव्यतिरेके न चेन्मानं तस्याऽव्यतिरेक एवास्त्विति, तत्राह। तस्मादिति। तत्र हेतुमाह। आत्मवादिभिरिति। देहात्मवादे नास्तिकतापातात्पुरुषार्थिभिरतिरिक्त आत्मा ऽत्राऽऽश्रयणीय इत्यर्थः। अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे अहं मनुष्य इति प्रत्यय इति प्रत्ययः कथमिति चेत्, तत्र वक्तव्यं किमस्य प्रत्ययस्य गतिः पृच्छ्यते, अथ वाऽतिरिक्तविषयत्वाऽभाव? इति। तत्र द्वितीयोऽसंगत इत्याह। अन्यथेति। अहंप्रत्ययस्य देहतादात्म्यविषयत्वे आत्मसाधकाऽभावात्तदसिद्धिरित्यर्थः। आद्यं दूषयति। अत इति। अहंप्रत्यय इत्युक्तेरप्रमाणत्वमुक्तमङ्गीकरोति। न हीति। तर्हि वैयर्थ्यमित्यत्राह। किं त्विति। न युक्त इत्यत्र भेदावबोधेऽपि न गौणत्वमित्युक्तं, तदयुक्तं, ज्ञाताऽज्ञातभेदयोर्भेदाऽभिमानस्य गौणत्वदर्शनादित्याशङ्क्याह। विचारणेति। अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे अहंव्यतिरिक्त इत्युक्तेः पौनरुक्त्यप्रसङ्गादित्यर्थः। तस्याभेदविषयत्वमिति शङ्कते। किं त्विति। अभेदविषयत्वे विमतिपत्त्यभावाऽऽपातात्स्वरूपमात्रविषयत्वमित्याह। सर्वदेति। तर्हि व्यतिरेकाऽभावः प्राप्तस्तत्राह। यौक्तिकेति। तदाऽहं मनुष्य इत्यस्य गौणत्वं, तत्राह। अत इति। युक्त्या भेदाऽनुसंधायित्वे तदापि तर्कज्ञानस्य परोक्षत्वात्ताऽपरोक्षभ्रमविरोधित्वामित्यर्थः।

कथमनुभव इत्येकग्रन्थत्वशङ्कां निरस्यति। तत्रापीत्यादिना। टीकाक्षराणामेषोऽर्थः। दूरस्थो ऽश्वकार इत्यस्य यथा न गौणत्वं

* स्य व्यतिरिक्तग्राहित्वमतःशब्दार्थः ।

अहंप्रत्ययस्य व्यतिरिक्तग्राहित्वे कथं भेदाऽनध्यवसायादित्यूचिवान् टीकाकृदित्याशङ्क्य विकल्पांतरत्वेन व्याचष्टे । किमर्थत इत्यादिना । भेदविशेषितप्रत्ययस्याऽध्यासविरोधित्वे विशेषणीभूतभेदस्यापि विरोधित्वात्कथमध्यास इत्यत्राह । व्यतिरेकेति । विशिष्टविरोधित्वे विशेषणस्यापि विरोधित्वमुक्तं, तत्राह । न त्विति । स्वकर्मपर्यायव्यावृत्तावप्ययं सर्प इत्यध्यासदर्शनान्न भेदमात्रस्य विरोधित्वमित्यर्थः । अध्यासव्यापकाऽभावान्नाऽहंकारतद्धर्माणामात्मन्यारोप इति चोदयति । नन्विति । विशेषरूपेणेति । चित्त्वेनेत्यर्थः । चित्त्वं प्रतिभाति परं, न त्वहंकारव्यावृत्तात्मधर्मतया, ततः प्रतीयमाने ऽपि संभवत्यध्यास इत्याह । तत्राहेति । द्वितीयमनुवदति । अथेति ।

ऐक्यग्रन्थशङ्कां निरस्यति । परिहरतीति । किं सर्वदा ऽहंप्रत्ययस्य विविक्तग्राहित्वम्, उत जिज्ञासोत्तरकालम्? आद्ये बहलाऽऽलोकमध्यस्थहस्त्यादौ विमत्यभाववदात्मनो ऽपि व्यावृत्ततया प्रतिभासान्न विप्रतिपत्तिः स्यात्, ततश्च जिज्ञासासंभव इति टीकार्थः । जिज्ञासोत्तरकालं गौणत्वं प्रागगौणत्वप्रसङ्ग इत्याशङ्क्याह । यौक्तिकेति । तत्सामान्यादिति । अहं मनुष्य इति प्रत्ययत्वसामान्यादित्यर्थः । उत्तरकाले गौणत्वंव्यवहारो न प्रागिति विशेषः । कथमित्यादेरयमर्थः । जिज्ञासायामपि न गौणत्वं युक्त्युत्थज्ञानस्याऽप्रामाणिकत्वादहंप्रत्ययस्य चात्ममात्रविषयत्वादिति शङ्के । कथमिति ।

---

* १८४ पृष्ठे १२ पङ्क्तौ अहंप्रत्यय इत्येतदग्रे ऽयं ग्रन्थः । तदादिः पृष्ठाऽन्त्यपङ्क्तौ ग्रन्थः प्रमादादधिको मुद्रितः ।

जिज्ञासाया अहंप्रत्ययविषयविवेचकत्वात्तद्विरोधाद् देहात्मबुद्धेर्गौणत्वमिति वक्तुं जिज्ञासास्वरूपमाह । जिज्ञासेति । युक्तेरप्रमाणत्वमुक्तमङ्गीकरोति । न हीति । तर्हि वैयर्थ्यमित्यत्राह । किं त्विति । न युक्त इत्यत्र भेदबाधेऽपि न गौणत्वमित्युक्तं, ज्ञातभेदयोरभेदाऽभिमानस्य गौणत्वदर्शनादित्याशङ्क्याह । विचारेणेति । अहंप्रत्ययस्य व्यतिरिक्तविषयत्वे अहंव्यतिरिक्त इत्युक्तेः पौनरुक्त्यप्रसङ्गान्नैतदित्यर्थः । तर्ह्यभेदविषयत्वमिति शङ्कते । किं त्विति । अभेदविषयत्वे विप्रतिपत्त्यभावाऽऽपातात्स्वरूपमात्रविषयत्वमित्याह । सर्वदेति । तर्हि व्यतिरेकाऽभावः प्राप्तस्तत्राह । यौक्तिकेति । तर्ह्यहं मनुष्य इत्यस्य गौणत्वं, तत्राह । अत इति । युक्तयो यदाऽनुसंधीयन्ते तदापि तर्कज्ञानस्य परोक्षत्वान्नाऽपरोक्षभ्रमविरोधित्वमित्यर्थः ।

कथमनुभव इत्येकग्रन्थत्वशङ्कां निरस्यति । तत्रापीत्यादिना । टीकाक्षराणामेषोऽर्थः । ह्रस्वोऽकार इत्यस्य यथा न गौणत्वं तद्वदहं मनुष्य इत्यस्यापीत्युक्ते दृष्टान्ताऽसंमतिमाशङ्कते । नन्विति । इदंरजतवदकारस्य ह्रस्वतयाऽनुभूयमानत्वादध्यासत्वमित्याह । अनुभव इति । अध्यासनां गमयतीति शेषः । यौक्तिकज्ञानेनाऽकारस्य ह्रस्वाद्व्यावृत्त्यभ्युपगमे अध्यासाऽनुभव इति कथमुक्तम्? न चाऽकारात् ह्रस्वस्य व्यावृत्तिप्रतीत्यभावात् अध्यासाऽनुभव इत्यपि शक्यम् । अकारस्य ह्रस्वात् व्यावृत्तिप्रतीतौ तस्मादितरस्यापि व्यावृत्तिप्रतीतिसंभवादित्यत्राह । अकारस्येति । इदमः समारोपितरूप्याद्व्यावृत्तावपि न तस्मात्तस्य व्यावृत्तिर्यथा तद्वदत्रापीत्यर्थः ।

एकस्य पृथक्त्वमात्रेण कथमितरस्य पृथक्त्वमुक्तं टीकायां? न खलु चैत्रपृथक्त्वेन मैत्रस्यापि पृथक्त्वमित्याशङ्क्य पृथक्त्वं किं

संयोगवदुभयगतम्, उत ह्रस्वत्ववदेकगतमिति विकल्प्याद्यं दूषयति ।° अन्यतरेति । पृथक्त्वस्य भेदव्यवहारकारणत्वादेकत्र ४७।११
पृथक्त्वज्ञाने ऽन्यत्रापि तज्ज्ञानं स्यात् । एकगतत्वे ऽप्यकारस्य ह्रस्वप्रतियोगिकभेदज्ञाने ह्रस्वस्यापि तत्प्रतियोगिको भेदो ऽधिगतः स्यात् । इतरथा न तस्यापि स्यात् । न च ह्रस्वदृष्टान्तः, तस्यापि त्वया व्यावृत्त्यङ्गीकारादित्यर्थः ।° नन्वित्यादेरयमर्थः । भेदज्ञाने ऽप्यभेदज्ञानं न गौणमित्येतदयुक्तमिति चोदयति । ननु महदेतदिति ।

एकताऽवगमो न गौणो यस्मात्तस्मादहं मनुष्य इति ज्ञानमिन्द्रजालमित्युच्यते, किं वा न गौण इति यत्तदिन्द्रजालमिति? तत्राऽऽद्यं दूषयति । बाढमिति । अङ्गीकृतमंशमाह । इन्द्रजालमिति । तत्र हेतुमाह । अविद्याकृतत्वादिति । भेदबोधात् अध्यासस्य निवृत्तत्वात् कथमध्यासत्वं ततो गौणत्वमिति द्वितीयकल्पं प्रत्याह । किं चेति । तथा ही त्यस्य एषो ऽर्थः । अहंप्रत्ययस्य देहादिप्रतिष्ठत्वमपि दृष्टमिति संबन्धः । तर्हि देह एवाऽऽत्मा स्यादिति तत्राह । स्वविषयेति । व्यतिरिक्तात्मप्रतिष्ठस्येत्यर्थः । तर्ह्युभयं स्यादिति, तत्राह । नदंकेति । अपिशब्दो ऽवधारणार्थो दृष्टपदेनाऽनुषज्यते । देहादिप्रतिष्ठत्वे हेतुमाह । अनादीति । अहंप्रत्ययमात्रस्याऽध्यासविरोधित्वे ऽपि सहकार्यनुरोधाद्विरोधितेति शङ्कते । ननु पूर्वमिति । सहकारिसन्निधावप्यहं मनुष्य इत्येवोपलम्भात्राऽतिरेकग्राहित्वमित्याह । नेत्याहेति ।

धूममात्रस्य वह्निमात्रबोधकत्वे ऽपि सौरभदर्शनसहकृतस्य श्रीखण्डेन्धनोत्थदहनबोधकत्वं दृष्टं, तद्वत् सहकारियुक्तस्याऽधिकग्राहिता । अहं मनुष्य इति दर्शनं न गौणमित्यत्राह । न हीति । दृष्टान्ते ४८
विशिष्टधूमस्य विशिष्टवह्निबोधकत्वं न तु धूममात्रजज्ञानस्य सह-

कारिसन्निधानादन्यविषयत्वमत्र तु प्रत्यक्षस्य यौक्तिकज्ञानसन्निधे-
४८।४ रन्यविषयत्वमुच्यते इति वैषम्यमित्यन्यः द्वितीयं दूषयति । विचा-
रेति । सदेति शेषः । अनिर्वाकिन ।मति वा । अनुसंधाने ऽपि
न निवर्तते ऽध्यास इत्याह। अनुसंधान ऽपीति। अपरोक्षभ्रमस्या-
परोक्षज्ञानातिनन्यत्वनियमाच्च परोक्षज्ञानेन बाध इत्यर्थः । अहं
मनुष्य इति प्रत्ययस्य देहतादात्म्यविषयत्वेन व्यतिरेकासिद्धि-
रित्युक्तमनुवदति । ननु प्रत्यक्ष इति ।

केवलयोरनुमानाऽऽगमयोर्व्यतिरेकाऽसाधकत्वे ऽपि युक्तिस-
हकृताऽहंप्रत्ययोपोद्बलिताऽऽगमाऽनुमानयोर्व्यतिरेकसाधकत्वं यु-
क्तमित्याह । उच्यत इति । बाल्याद्यवस्थासु शरीरव्यावृत्ताव-
प्यहंप्रत्ययो ऽनुवर्तते । अनुवर्तमानस्य च व्यावृत्तात्सत्त्वाऽऽलम्बन-
त्वाऽयोगात्सकलावस्थाऽनुस्यूतमात्मतत्त्वमालम्बनमहंप्रत्ययस्येत्याद्या
युक्तिः । इतरदुक्तम् अनादित्वाच्चेत्यत्र ।

पूर्वदृष्टत्वे हेत्वन्तरमुपन्यस्यत इति भातिभाति, तदनुपपन्नं,
प्राक् पूर्वदृष्टत्वाऽनुपपादनादित्याशङ्क्य वृत्तसंकीर्तनपुरःसरमुत्त-
रग्रन्थमवतारयति। स्वप्रकाशत्वादिति। लक्षणाशेषद्वारेण परत्रेत्यं-
शो विवक्ष्यते । अधिष्ठानप्रमाणनद्दोषसंस्काराणां भ्रम-
जनकत्वादत्राप्यधिष्ठानप्रमाणं तावन्मनुमिष्टाति चाह। चैतन्येति।
तस्य प्रमाणत्वमुपपादयति । आत्मेति आत्माऽवभासित्वमा-
त्मव्यवहारहेतुत्वमित्यर्थः । घटव्यवहारस्य स्वाऽन्यत्वं दृष्टं तद्व-
दत्रापीति शङ्कां निरस्यति । अद्वितीयेति । दोषस्त्वविद्येत्याह ।
तद्वतेति । कारणत्रितयसंभवे ऽप्यध्यासाऽसंभव इति शङ्कते ।
४८।१७ नान्वति । संसृष्टव्यवहाराऽनुपपत्त्या ऽधिष्ठानारोपविषयमेकं ज्ञानं
जन्य च दृष्टमन्यत्र, अत्र त्वन्यथा, ऽऽत्मनो ऽविषयत्वादधिष्ठा-
नारोप्यज्ञानस्य चैतन्यस्य नित्यत्वाच्चेत्यर्थः । आत्मनो ऽविष-

यत्वे ऽपि आरोप्यस्फुरणादन्यज्ञानाऽभावादधिष्ठानत्वमिति टीकार्थः ।

आरोप्यस्फुरणव्यतिरिक्तस्फुरणऽसंबन्धित्वेनाऽधिष्ठानत्वं कथमुक्तं? तुच्छस्याप्यधिष्ठानत्वाऽऽपातादिति, तत्राह । आत्मेति । आरोप्याऽधिष्ठानयोरेकस्फुरणत्वस्याधिष्ठानत्वप्रयोजकत्वात्तु च्छस्य चातादृक्त्वान्नाऽधिष्ठानत्वमित्यर्थः । जन्यत्वं घटयति । स्वरूपेणेति । एतदभिसंधायोक्तं भोक्तृचैतन्येति । आरोप्यस्याधिष्ठानाऽभिन्नाऽनुभवफलत्वाद्विषयसंवलितत्वेन जन्यत्वाच्च लक्षणापपत्तिरिति टीकार्थः । आत्माऽनात्मनोर्विरुद्धयोः कथमैक्यं? तत्राह । भ्रान्तित्वादिति । प्रमाणतयैक्याऽनवभासेपि भ्रान्त्या तत्प्रतिभास इत्यर्थः । लक्षणसमर्थनमुपसंहरति । इतिकारणेति । किंशब्दस्य व्याख्यानत्वात् पुनस्तत्कस्मादित्याशङ्क्योत्तरशेषत्वादनुवाद इत्याह । कथमिति । प्रश्नाऽऽक्षेपयोरुभयोरपि कृतत्वात् पृष्टमनेनेति मत्वाऽऽक्षिप्तं मयेति च कथमुक्तमित्याशङ्क्याऽध्याहारेण योजयति । पृष्टमिति । सर्वगतत्वेन पुरःस्थितत्वादज्ञानविषयत्वाच्चाविषयत्वाऽभिधानं भाष्यटीकयोरसंगतं, तत्राह । अध्यस्यमानेनेति । बाढमित्यादेरेषो ऽर्थः ।

अध्यास आक्षिप्यते चेत् कथं पुनरध्यास इत्येवोच्यतां किं प्रत्यगात्मनीत्याशङ्क्याऽन्यत्राऽध्यासमङ्गीकृत्य विशेषविषये आक्षेपं द्योतयितुमित्याह । बाढमिति । अरूप्ये रूप्याऽध्यासवदविषयेपि विषयारोप इति शङ्कते । कथमिति । विषयत्वस्याऽधिष्ठानत्वव्यापकत्वात्तदभावे ऽभावं दर्शयितुं तस्य व्यापकत्वमाह । यत इति । ऐन्द्रियकाऽऽरोपे ऐन्द्रियकस्यैवाऽधिष्ठानत्वमित्याह । पुरोवस्थितइति । गगने रूपाद्यारोपदर्शनादैन्द्रियकत्वमप्रयोजकं विषयत्वं त्वारोपाऽनुपपत्त्यापि कल्प्यतइत्याश-

ङ्क्य विषयत्वे इदन्तया प्रथमं स्यात्, तच्च नेष्टमित्याह । युष्मत्प्रत्य-येति । आत्मनो विषयत्वाऽभिधानं सिद्धान्तविरुद्धं चेत्याह । ब्रवीषीति । अविषये ऽपि संवेदने क्षणिकत्वाद्यारोपो दृष्ट इ-त्याशङ्क्य दृष्टान्तो ऽसंप्रतिपन्न इत्याशयेनाह । न हीति । न केवलमदर्शनमेव, अपि त्वसंभवश्चेत्याह । संभवी त्विति ।

एकान्तेनाऽविषयो नेति वदता सुषुप्त्यादिसाक्षिमात्रमात्मनो ऽभ्युपगतं, तत्र कर्मत्वाऽभावे कथमधिष्ठानत्वमित्याशङ्क्याह । तत्रेति । अधिष्ठानारोप्ययोरेकबुद्धिस्फुरणे सति कर्मत्वाऽभा-वाऽपराधेनाऽध्यासाऽभावाऽनुपलब्धेः कर्मत्वमप्रयोजकमित्यर्थः । अस्मदिति प्रत्ययो यस्य सो ऽस्मत्प्रत्ययो ऽहंकारः । अस्म-च्चासौ प्रत्ययश्चेति वा । तत्र बिम्बितत्वमस्मत्प्रत्ययविषयत्वम् ।

कर्तृकर्मविरोधेन विषयत्वनिराकरणमनुपपन्नम्, अन्तः-करणाविषयत्वस्याऽस्मत्प्रत्ययविषयशब्दार्थत्वादित्याशङ्क्याह । अस्मत्प्रत्ययेति । गमनक्रियाकर्तृत्वं दर्शनक्रियाकर्मत्वं चैकत्रो-पलब्धमिति न विशेष इत्याशङ्क्याह । एकस्यामिति । देहः स्वा-ऽतिरिक्तद्रष्टृक इत्यत्र एकस्येन कर्तृत्वं कर्मत्वं च, तदर्थं प्रत्यक्षेति विशेषणम् । कर्तृभेदे विरोधाऽभावं निराकर्तुमेकस्येत्युक्तम् । काल-भेदेनाऽविरोधं निराकर्तुमाह । तदेति । कर्तृस्थानं क्रियां प्रति गुणभावः कर्मकरणस्थानं क्रियां प्रति प्राधान्यम्, तत्रैकेनांशेन कर्तृत्वमपरेण कर्मत्वमित्यङ्गीकरणान्न विरोध इति शङ्कते । अस्तु तर्हीति । निष्कलादिवचनविरोधान्नैवमित्याह । नेत्याहेति । कर्तृकर्मविरोधनिराकरणार्थमहंकारो ऽस्मत्प्रत्यय इत्युक्तं तथापि न विरोधो निराकर्तुं शक्यः । अहंकारशब्दस्याऽहंप्रत्ययार्थ-त्वादित्याशङ्क्याह । तत्रेति । अन्तःकरणमस्मत्प्रत्यय इति प्रथमं संबन्धः, प्रतीयमानत्वेन प्रत्ययत्वम् । आत्मनो दृग्रूपत्वादन्तः-

करणविषयत्वमनुपपन्नमित्याशङ्क्याह । आत्मचैतन्यस्येति । ४९।८
अन्तःकरणे प्रतिबिम्बिततया स्फुटत्वं विषयशब्दार्थः ।

परिच्छिन्नस्यैवाऽधिष्ठानत्वमित्यभिनिविशमानं प्रत्याह । सविकल्पकतयेति । जडत्वाऽविशेषेऽपि कस्य चिद्व्यञ्जकत्वं कस्य चिन्नेति कथं? तत्राह । भास्वरेति । पार्थिवत्वेऽपि वैदूर्यपाषाणादीनामान्तरालिकभेदवदिदं इत्यर्थः । अन्तःकरणेन संयोगाऽसंभवात्कथं तत्र व्यक्तत्वं? तत्राह । आत्मनीति । आत्मव्यङ्ग्यस्याऽन्तःकरणस्य कथं तद्व्यञ्जकत्वं? तत्राह । तत्र सर्वेत इति । द्व्याकाराऽवभासत्वाऽभावान्नाऽन्तःकरणमध्यस्तमिति चोदयति । नन्विति । द्व्याकारत्वाभावोऽसिद्ध इत्याह । अत इति । इदमनिदंरूपे वस्तुनी गर्भे यस्य स तथोक्तः । चिद्रूपेणाऽहंकारगतजाड्याऽभिभवात्तस्मिन्नहंकारो गर्भित इवास्ते इदंरूपेण च चैतन्यगतस्वप्रकाशकत्वतिरोधानादनिदंरूपमिदंरूपे गर्भितमिवेत्यर्थः । गर्भशब्दप्रयोगः कस्मादित्याशङ्क्य पृथक्त्वेन धर्मिद्वयप्रतीत्यभावादित्याह । अयो दहनीति । द्वैरूप्यावभासमिति । अग्नेश्चतुष्कोणत्वाद्याकारता अयसश्च दग्धृतेत्यर्थः । अहमुपलभ इत्यत्रोपलब्धिविशिष्टोऽहंकारः प्रतीयते न रूपान्तरं, दृष्टान्ते तु दग्धृत्वस्य दहनधर्मतया प्रसिद्धत्वाद्रूपान्तरसंश्लेषनिश्चय इत्याशङ्क्याह । असाधारणेति । उपलब्धेः स्फुरणात्मिकाया जडधर्मत्वाऽभावादुपलम्भधर्मात्मा बुद्धिसंबद्धतया प्रथते, बुद्धिश्च परिणममाना चित्संवलिततयेत्यर्थः ।

सर्वलोकसाक्षिक इत्यत्रेदमनिदंरूपमनुभूयते इत्युक्तं, तन्न संभवति अननुभवादेवेत्याशङ्क्याऽनुभवमभिनयति । दुःखीति । ४९।१२
निरतिशयप्रेमास्पदत्वेन सुखरूपत्वं प्रतीयते । तस्मिंश्च दुःखसंबन्धाऽनुपपत्तेर्दुःख्यन्यदिति द्वैरूप्यम् । एतदभिप्रेत्योक्तम् ।

अवहितचेतस्तयेति । विधान्तरेण द्वैरूप्यमाह । परिणामीति ।
सुखाद्याकारेण परिणामिनी बुद्धिः तदुत्पत्तिनाशसाक्षिचैतन्य-
म् । एकस्मिंश्च साक्षिसाक्ष्यभावाऽनुपपत्तेरिति द्वैरूप्यम् । तदुक्तं
४९।१३ निपुणमभिवीक्ष्येति । द्वैरूप्यान्तरमाह । अहंकारेति । बुद्धितद्वृ-
त्तिविषयसाक्षितया ऽनुस्यूतं स्फुरणम् । अहंकारस्तु व्यावृत्तः ।
न च एकस्मिन्ननुवृत्तत्वं व्यावृत्तत्वं च संभवति । तदुक्तं नि-
पुणतरमिति ।

असंभिन्नेदंरूप इति कथमुक्तम्? अहंकारस्य इदमंशताया उक्तत्वादित्याशङ्क्याऽऽत्मलक्षणलक्षितत्वादहंकारो ऽनिदमंश इत्याह । नन्विति । अनात्मत्वे ऽपि संविदाश्रयतया स्फुरणं घटतइति चोदयति । नन्विति । अयःपिण्डस्याऽदग्धृत्वे ऽपि दहनसंसृष्टतया दग्धृत्वस्फुरणवदात्मसंसृष्टतया तथा स्फुरणं भवतीत्यर्थः। उत्तरग्रन्थस्य प्रश्नाऽननुरूपत्वमाशङ्क्य तात्पर्यमाह । अयःपिण्डेति ।

तर्हि येन ग्रन्थेनाऽहमात्मत्वं प्रतिपाद्यते तावता ऽलं किं
प्रमातृप्रमेयेत्यादिनेत्याशङ्क्याऽऽत्मनः संविदाश्रयत्वेनाऽऽपरोक्ष्यं
विषयस्य कर्मतया संविदः स्वप्रकाशतयेति विभागं वक्तुमाप-
रोक्ष्ये विप्रतिपत्तिं तावदाह । तत्र सांख्या इति । तत्र वादिनां
मध्ये सांख्यास्त्वात्मानमनुमिमतइत्यन्वयः। अनुमानमाह। अचि-
दात्मनीति। अन्तःकरणस्य चित्त्वान्न तत्र चित्प्रतिबिम्बभाव इति
शङ्कां व्यावर्तयितुम् अचिदात्मा इति विशेषणं, करणत्वात् दीपवन्न
चित्त्वमित्यर्थः। बिम्बान्तरपुरस्सर इत्युक्ते यत्किंचिद्बिम्बपुरःस-
४९।२२ रत्वसाधनेनाऽर्थान्तरत्वं,तदर्थमाह । तथाविधेति । तथाविधशब्दः
प्रतिबिम्बसदृशवाची । इच्छादयो गुणा इत्युक्ते यस्य कस्य चिद्
गुणा इत्यर्थान्तरत्वं,तदर्थमाह महाभूतेति । पृथिव्यादीति स्वरू-

[illegible]: [illegible]मनुमा[illegible]म् । गुणत्वादित्युक्ते गन्धादिषु व्य-
भिचारस्तदर्थं तिष्ठदवृत्त्वे सतीति विशेषणम् । एतावदुक्ते पर-
[illegible] व्यभिचारस्तदर्थं गुणत्वादिति । विशेषपदं तु दिगा-
दिगुण[illegible]व्यावृत्त्यर्थम् ।

विशेषगुणत्वं साधयति । एकेन्द्रियग्राह्यतयेति । गुणत्वे [illegible]
सत्येकेन्द्रियग्राह्यो विशेषगुण इति द्रष्टव्यम् । इदमत्र विवक्षि-
तम् । इच्छादि पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितं तदसमवेतत्वे
सति विशेषगुणत्वात् यन्नैवं न तदेवं यथा गन्धादि । न च हेत्वसि-
द्धिः । न तावत्स्पर्शवद्विशेषगुणत्वम् अयावद्द्रव्यभावित्वात्, स्प-
र्शवद्विशेषगुणानां च यावद्द्रव्यभावित्वात् । नापि नभोगुणता ।
[illegible]र्बाह्येन्द्रियाऽग्राह्यत्वात् । न च दिक्कालमनोगुणत्वम् । ते-
षां विशेषगुणविधुरत्वात् । तस्मादाश्रयान्तराऽनिरूपणादाश्रय-
स्य चाऽवश्याऽऽश्रयणीयत्वात्तद्।श्रयत्वेनाऽऽत्मसिद्धिरिति ।

एवं प्रमातृपारोक्ष्यमभिधाय सौत्रान्तिकमतमनुसृत्य प्रमेय-
पारोक्ष्यमाह । तथेति । यथा प्रमातुः पारोक्ष्यं तथा विषया अनु-
मेया इति कल्पयन्तीत्यन्वयः । अनुमानमाह । संवेदनेष्विति ।
घटः स्फुरतीति घटनिष्ठतयोपलभ्यमानं स्फुरणं करणजन्यं का-
दाचित्कत्वात् संप्रतिपन्नवत् । तत्र च कारणान्तराऽनिरूपणादात्मस-
मवेतं ज्ञानं कारणतया संन्त्यवतीति नित्याऽनुमेयत्वं वार्तिककारी-
या मेनिरे इति द्रष्टव्यम् ।

एवं मतभेदमभिधाय तदूत्तरत्वेन टीकामवतारयति । ता-, ५०।४
[illegible]तीतिं किमात्मन आनुमानिकत्वमात्रमुच्यते, उत नित्याऽनुमे-
यत्वमिति विकल्प्याऽऽद्यं प्रत्याह । यदीति । स्पष्टीकरणार्थानि
[illegible]निराकरणेन संभावनाबुद्धिजनकानि । द्वितीयमनूद्य दू-
षयति । [illegible] नित्येति । [illegible]सन्निधानपुरःसर इत्यत्र [illegible]

तेन तत्स्फुरणमङ्गीकृत्य किम् आकारार्पको विषयो ऽस्वीत्यनेनाव-
गम्यते, आहो घटाकारसंवेदनेन विषयस्याऽवगमात् इत्या-
भित्य; तत्राऽऽद्ये सिद्धसाध्यत्वं, द्वितीये किमनुमानज्ञाने व्या-
प्त्यव्यवधानं विना प्रतिज्ञातार्थः प्रथते, उत नेऽति विकल्प्याऽऽद्यं
दूषयति । सौत्रान्तिकस्यापीति । फलितमाह । इतीति । अने-
कान्तइत्यनियत इत्यर्थः । यद्यदाकारं ज्ञानं तत्तद्विषयं न भवती-
ति न नियमो ऽनुमाने व्यभिचारादित्यर्थः । द्वितीयं दूषयति । न
चेदिति । अनुमानाऽनुदय इति । प्रयोजनहीनमनुमानमिति याव-
त् । घटाकारज्ञानस्य घटविषयत्वाऽभावे प्रत्यक्षविरोधो ऽपीत्या-
ह । अपरोक्षेति । अपरोक्षमिति व्यवहारयोग्यो यो विषयाऽव-
भासः तेन विरुद्धत्वमिति यावत् । ज्ञानपारोक्ष्यांऽनुमाने ऽप्यनु-
भवविरोध इति द्रष्टव्यम् ।

एवं प्रमेयादीनां पारोक्ष्यं निराकृत्य प्रमेयस्य कर्मतया परो-
क्षत्वं संविदः स्वप्रकाशत्वेनाऽऽत्मनस्तदाश्रयत्वेनेति वक्तुं प्रथमं
प्रमेयस्य संविदभिन्नतया ऽपरोक्षत्वमनूद्य दूषयति । अत्रेति ।
यदपरोक्षं तद्विज्ञानाऽभिन्नं यथा संवित् अपरोक्षश्च घटादिरिति
चोद्यार्थः । कर्मतया ऽपारोक्ष्ये हेतुमाह । इदमिति । द्विविधया
दर्शनक्रियाकर्मत्वेन विषयस्फुरणात्तद्विरुद्धमभेदाऽनुमानमित्यर्थः ।
किं च रजतादेर्बहिष्ट्वं ज्ञानाद्भिन्नमुताऽभिन्नम्? आद्ये तत्र व्यभि-
चार इत्याह । न चेति । द्वितीयमनुवदति । तदपीति । तस्य बाह्य-
त्वान्न ज्ञानाऽभेदो युक्त इत्याह । न रजतवदिति । कथं तर्हि
विषयाऽपारोक्ष्यमित्यत्राह । तस्मादिति । संविदुपाधित्वं संवि-
द्विशेषणत्वम् एतावत्युक्ते चाक्षुषज्ञानमिति ज्ञानविशेषणमक्ष्णो
ऽप्यपरोक्ष्यं स्यात्, तदर्थमाह । अव्यवधानेनेति । चक्षुषोऽपि
चाक्षुषमित्युक्त्यानिरव्यवधानेन चक्षुषो ज्ञानविशेषणमात्रत्वमाहेति-

रित्यर्थः । न चानुभवस्यापि संविद्विषयत्वेनाऽपरोक्षत्वप्रसङ्गः, संविच्छब्देन इन्द्रियार्थसंप्रयोगजज्ञानस्य विवक्षितत्वादित्यर्थः ।

विप्रतिपत्त्यन्तरमुत्थापयति । तत्रेति । मनसा संयुक्त आत्मा तस्मिन् समवायः संयुक्तसमवायः, स निमित्तं यस्य तत्संयुक्तसमवायनिमित्तं, तच्च ज्ञानं चेति तथोक्तं, तस्मादित्यर्थः । पक्षान्तरमाह । अथेति । चक्षुषा संयुक्तार्थेन तादात्म्यसंबन्धात् प्रमितिविषयं ज्ञानान्तरमुपजायते तेनाऽऽपरोक्ष्यं प्रमितेरित्यर्थः । तदुभयत्वेन टीकामवतारयति । तान् प्रतीति ।

प्रमातृ प्रमिती न कर्मतया परोक्षे प्रमाणाऽभावादिति सिद्धान्तः । कर्मत्वाऽभावे तयोः कथमापरोक्ष्यम्? इति चेत् । तत्र वक्तव्यं; किं कर्मत्वाभावेन परोक्षत्वं सिषाधयिषितम्, उताऽऽपरोक्ष्येण कर्मत्वमिति । तत्राद्यमनुभवविरोधेन दूषयति एवेति । नापि द्वितीयः । अननुभवत्वाऽनात्मत्वप्रसङ्गादित्याह । केवलमिति । कर्मतया आत्मन परोक्ष्याऽभावे हेतुमाह । न तावदिति । प्रमाणाऽभावो ऽसिद्ध इति शङ्कते । सति मनसेति । व्यापृते मनस्यात्मद्रष्टेरितरत्राऽदृष्टेर्मानसत्वमात्मन इत्यर्थः । आत्मव्यवहारहेतुविषयाऽनुभवविषयतया ऽन्यथासिद्धिमाह । न विषयेति । आत्माऽनुभवाविषयत्वमेव तयोः किं न स्यादित्याह । विषयेति । विषयज्ञानाश्रयत्वेनाऽऽत्मनि व्यवहारसंभवे ज्ञानान्तरात्तत्सिद्धिकल्पनायां गौरवं स्यादित्यर्थः ।

कर्मतयां प्रमितिरपरोक्षेति यदुक्तं, तन्निरस्यति । न चेति । आत्मसमवेताऽनुभवस्य संयुक्तसमवायादपरोक्षता, विषयसमवेताऽनुभवस्य संयुक्ततादात्म्यादिति न च वक्तव्यमित्यन्वयः । प्राक् ज्ञानं येन मनःसंयोगेनाऽजनि तेनैव तद्विज्ञानान्तरं जायते

[illegible] संयोगान्तरेण। नाद्यः। असमवायिकारणभेदस्य [illegible] कमप्रयोजकत्वात्। द्वितीये ऽपि किं ग्राहकज्ञानसमये ग्राह्य[illegible] मस्ति, उत न? न चेत्तत्राह। प्रत्यक्षस्येति। प्रत्यक्षस्य वर्तमान-ग्राहित्वनियमात् पूर्वज्ञानस्य च तदा नष्टत्वान्न प्रत्यक्षत्व[illegible] स्यर्थः।

आद्ये दूषणमाह। युगपदिति। उत्तरज्ञानसमये पूर्वज्ञाना-ऽस्तित्वाङ्गीकारे फलद्वयस्य युगपदवस्थानमापतितम्, न च त-त्संभवति। तथा हि। पटज्ञानसमये मनसि क्रिया, ततो विभा-गः, ततः पूर्वसंयोगविनाशः, तत उत्तरसंयोगात् ज्ञानजनि,रि-त्यनेकक्षणविलम्बेनोत्पद्यमानज्ञानान्तरसमसमयमाशुतरविनाशि-नः पूर्वज्ञानस्याऽवस्थानमसमञ्जसम्। न च विनश्यदवि[illegible]-तोः सहाऽवस्थानमिष्यते इति शङ्क्यम्, पूर्वोत्तरवेदनयोर्निवर्त्य-निवर्तकभावेन विरोधाद्भास्यभासकवताऽनुपपत्तेरित्यर्थः।

तादात्म्यसंबन्धाद्विषयगतप्राकट्यं प्रत्यक्षमित्यत्र दूषणान्त-रमाह। संयुक्तेति। संयुक्तसंबन्धात्, संयुक्ततादात्म्यसंबन्धादि-त्यर्थः। अथ वा संयुक्तसमवायसंबन्धात् संयुक्ततादात्म्यसंब-न्धाद्वा ऽनुभवावभासे आत्मगतस्य परिमाणस्य विषयगतस्या-देश्च तेन ज्ञानेनाऽपरोक्षत्वं स्यादित्यर्थः। परिमाणादीनामयोग्य-त्वादनुभवग्राहकेणाऽग्रहणमित्याशङ्क्याऽयोग्यत्वमत्रापि तुल्य-मित्याह। अनुभवस्येति। अनुभवो न ज्ञानान्तरगम्यः स्वसत्तायां प्रकाशव्यतिरेकविधुरत्वात्, य यदेवं न तदेवं यथा घट इत्यर्थः। आद्येन चकारेण हेत्वसिद्धिमुद्धरति। स्वसत्ता-यां प्रकाशव्यतिरेकित्वे जिज्ञासायां सन्देहादि स्यादित्यर्थः। द्वि-तीयेन चकारेण सुखादिषु साधनाऽव्याप्तिशङ्कां निरस्यति। सुखादीनामपि ज्ञानात्मकत्वेन प्रकाशमानत्वादित्यर्थः।

विषयनिष्ठं प्राकाट्यं स्वप्रकाशमिति मते तस्य ज्ञानेन दृष्टि-पार्मिताह । न चान्स्येति । किं परिस्पन्दलक्षणो व्यापार, उत परिणामलक्षण? इति विकल्प्याऽऽद्यं प्रत्याह । सर्वगतस्येति । द्वितीयं दूषयति परिणामेति । मृत्परिणातिफलस्य घटस्य मृन्निष्ठत्ववदनुभवस्यापि परिणामिसमानाधिकरणत्वमाश्रयणीयमित्यर्थः । जनकपरिणामफलस्य परिणामिसमानाधिकरणत्वेऽपि सकर्मकक्रियाफलस्य विषयनिष्ठत्वं क्रियायाः कर्मण्यतिशयजनकत्वाभाव्यादित्याशङ्क्य किं संविदाश्रयत्वं चेतनत्वप्रयोजकम्, उत तज्जननव्यापारवत्त्वम्? आद्ये विषयस्यैव चेतनतोत्पत्तिरित्याह । संविदाश्रयत्वइति ।. द्वितीयेऽपि किं संविज्जननव्यापारवत्त्वमात्रं विवक्षितम्, उत संविज्जनकज्ञानव्यापारवत्त्वमिति विकल्प्याऽऽद्यं दूषयति । न चेति । द्वितीयं प्रत्याह । विषयेति । मया गतो ग्राम इत्यत्र स्वगतगमिक्रियाकर्मत्वं ग्रामस्योपलब्धं तद्वन्मयेदं विदितमित्यत्रापि स्वगतविदिक्रियाकर्मत्वं विषयस्याऽनुभूयते, तन्न स्याद्विषयनिष्ठत्वइत्यर्थः । आत्मसमवेतज्ञानक्रियाजन्याऽनुभवव्याप्तत्वाद् घटो मया विदित इत्यनुभवो विरुद्ध इत्याशङ्क्य परिणामक्रियातत्फलयोरेकाधिकरण्यनियमान्न ज्ञानाऽनुमितिरित्याह । स्वात्मनीति । उपसंहरति । तस्मादिति ।

संविदात्मनोः कर्मत्वाऽभावे किमुभयोरपि स्वप्रकाशत्वेनाऽपरोक्षत्वम्, उताऽन्यतरस्येति विकल्प्याऽऽद्यं दूषयति । न चेति । गौरवप्रसङ्गादित्यर्थः । द्वितीयेऽपि किमात्मनः स्वप्रकाशत्वम्, उत संविद इति । आद्यमङ्गीकरोति । अन्यतरस्येति । द्वितीयस्त्वनुपपन्न इत्याह । एवेति । आत्मस्वप्रकाशमात्रेणैव व्यवहारसंभवे तत्समवेताऽभिन्नसंवित्स्वप्रकाशत्वकल्पने गौर-

प्रमायतेरिति भावः । अनुभवस्य जडत्वे ऽननुभवत्वप्रसङ्गा-
दमिप्याह । नेत्याहेति । प्रमितिः स्वप्रकाशा अनुभवत्वात् व्य-
तिरेकेण घटवादित्यर्थः । अस्वप्रकाशत्वे ऽप्यनुभवत्वं किं न
स्यादित्याशङ्क्य फलत्वभङ्गो बाधक इत्याशयेनाह । प्रमाणफल-
मिति । न च कल्पनागौरवं, प्रामाणिकगौरवस्याऽदोषत्वादित्य-
र्थः । आत्मा स्वप्रकाशः आत्मत्वात् व्यतिरेकेण घटवदित्यनु-
मानात्सिद्धं तत्स्वप्रकाशत्वमपीत्याशङ्क्याह । तद्बलेनेति । आत्म-
नो ऽस्वप्रकाशत्वे ऽपि नाऽनात्मत्वं संविदाश्रयत्वेनाऽऽत्मत्वोपप-
त्तेरितरस्य तु वेद्यत्वे घटादिवदननुभवत्वं दुर्वारमित्यर्थः ।

संविदः फलत्वमसिद्धमित्याशङ्क्य तत्परिहारत्वेनाऽस्या
प्रमितिरनुभव इत्येतद्व्याकरोति । अथ वेति । इत्थं वा ज्ञाने-
नेति शेषः । कथमसिद्धिरिति शङ्कायामाह । हानेति । चक्षु-
र्यसंनिकर्षाऽनन्तरं हानाद्युपलम्भात्तस्य फलत्वमित्यर्थः । प्र-
मिति : प्रमाणफलं न हानादिः । तत्र हेतुमाह । अनुभवेति ।
चक्षुष्ट्वसंनिकर्षेऽप्यर्थानुभवाऽभावे तद्विषयहानाद्ययोगादनुभवः
फलमित्यर्थः । हानाद्यतिरिक्तफलकल्पनायामनवस्थेत्याशङ्क्या-
ह । स्वयंप्रकाशइति । संनिकर्षे सत्यर्थाऽनुभवाऽभावेन हानाद्य-
भावाऽदर्शनादनुभवस्याऽप्रयोजकत्वमित्याशङ्क्याह । न हीति ।

संवेदनस्यैव प्रमाणत्वात्प्रमाणफलं तदित्युक्तमयुक्तमिति
चोदयति । नन्विति । कथं तर्हि प्रमाणफलविभाग? इत्याश-
ङ्क्याह । संवेदनमिति । अर्थाकारविशिष्टतया संवेदनस्य प्रमा-
णत्वं तत्स्फुरणरूपेण फलमित्यर्थः । लोके करणफलभावस्या-
त्यन्तभेदव्याप्तत्वादत्रापि स आश्रयणीयः । इतरथा करणफ-
लभावो न स्यात् । ततश्च संविदतिरिक्तं करणमास्थेयमित्य-
भिप्रेत्याह । तद्व्यावर्तयतीति । प्रमातृव्यापारः किं परिस्पन्दः

[illegible]त्याह । कर्तृश्चेति । अहंप्रत्ययस्यापि भिन्नकर्मकर्तृत्वे घटा-
दिप्रत्ययतुल्यत्वमित्याशङ्क्य द्रव्यबोधस्वरूपस्यात्मनो द्रव्यांश-
रूपबोधाकारप्राधान्येन कर्तृत्वं, बोधात्मकद्रव्याकारप्राधान्येन क-
र्मत्वम्, अतो नोक्तदोष इत्यभिप्रायेणोक्तं प्रमातृप्रमेयविभागोप-
पत्त्वादिति । अंशद्वयस्योक्तत्वादनंशत्वाऽसिद्धिमाशङ्क्याह । तत्र
सामान्येति । सामान्यांशस्य, द्रव्यांशस्येत्यर्थः । विशेषांशस्य, बोधां-
शस्येत्यर्थः ।

अंशाभेदेन कर्तृकर्मव्यवस्थाऽभावे ऽपरिणामित्वादित्येव
इत्यन्तरमुपन्यस्यतहीति प्रतिभाति, तदनुपपन्नम्, अपरिणामित्व-
स्य तद्साधकत्वात् तदसिद्धेश्चेत्याशङ्क्याह । निरवयवस्येति ।
आत्माऽनात्मविषयज्ञानद्वयपरिणामस्य निरवयवे युगपदसंभवादि-
त्यर्थः । प्रमेयस्य चेत्यत्र घटादेरनात्मत्वमुच्यते, उत द्रव्यांश-
स्य? आद्ये प्रकृताऽनुपयोगिता, द्वितीये तु पौनरुक्त्यमित्याशङ्क्या-
ह । किं चेति । न केवलं द्रव्यांशस्याऽनात्मत्वं किं तु बोधांशस्या-
पीत्येतत् किं चेत्यनेनोच्यते । किं ग्राहकांशः सुषुप्तकल्पः, उत
तद्व्यापृतः? आद्ये तद्व्यवहाराऽनुपपत्तिरित्यभिसंधाय द्वितीयपक्षं
विकल्प्य दूषयति । ग्राहकेति ।

अनुभवांशे स्वयंप्रकाशत्वाद्यभ्युपगमे ऽप्यहंकारस्य ग्राह-
स्यादिदमंशत्वं, ततो नेदमंश इति ग्रन्थाऽनुपपत्तिमाशङ्क्य ग्राह-
स्याऽसिद्धिमाह । तस्मादिति । अहं जानामीति संविदाश्रय-
त्वेनाऽहंकारप्रतिपत्तेस्ततस्तस्याऽऽत्मत्वं, तत इदमंशाऽभिधानम-
युक्तमित्यर्थः । नीलादिज्ञानमित्यत्र ज्ञायते ऽनेनेति करणव्युत्प-
त्तिकर्णो विवक्ष्यते, ग्रहणं चेत्यत्रापि करणव्युत्पत्त्या संनिकर्षो
विवक्षित इत्यर्थः । अहंकारस्याऽऽत्मत्वे ऽभिहिते ऽनात्मत्वं कि-
मात्मना साधनीयं, किं स्वप्रकाशत्वसाधनेनेत्याशङ्क्याह

हंकारस्येति । अहंकार आत्मत्वाऽनाधारः, अस्वप्रकाशत्वात् घटवत् । न चाऽहंकारस्याऽस्वप्रकाशत्वेऽप्यात्मत्वं किं न स्यादिति शङ्क्यम् । आत्मनः स्वप्रकाशत्वस्वाभाव्यादहंकारस्यात्मत्वे स्वप्रकाशत्वानुपपत्तेः । तस्मात्स्वप्रकाशत्वसाधनमुचितमित्यर्थः ।

उत सो ऽपीत्यत्र तच्छब्देन जडप्रकाशस्यानन्तरं निर्दिष्टत्वात्तद्ग्रहणशङ्कायामयोग्यत्वात्तदग्रहणमित्याह । उत सोऽपीति । अनुभवस्य स्वप्रकाशतया अभिहितत्वादात्मनश्च ग्राहकतया सिद्धसाधनात्कथं विकल्पाऽवसर? इति चेत् । अत्र ब्रूमः । यद्यप्येवं विभागो ऽभ्यधायि तथापि युक्ताऽयुक्तत्वनिरूपणार्थं विमर्शसंभव इत्यर्थः । न तावत्प्रथमः कल्प इत्यत्राऽऽत्मनश्चित्त्वेऽनुभवाऽनुपपत्तिं प्रतिज्ञायाऽनुभवस्य जडत्वं निराक्रियते, तत्र च वैयधिकरण्यं स्यादित्याशङ्क्याऽनुभवो जडप्रकाश इति न मतान्तरं किं तु पूर्वकल्पान्तर्भूतमिति दर्शयति । तत्रात्मेति ।

ज्ञानं किमज्ञायमानमर्थप्रकाशकम्, उत ज्ञायमान?मिति विकल्प्याऽऽद्ये दूषणमुक्तं जडरूपइत्यनेन, तन्नोपपद्यते । चक्षुरादिवदप्रकाशमानस्यापि प्रकाशत्वसंभवादिति शङ्कते । नन्विति । संवेदनं व्यवधानेन प्रकाशकम्, उत न? नाद्य इत्याह । न विषयेति । न च प्रकाशकत्वात्संवेदनस्यापि व्यवधानेन प्रकाशकत्वमिति शङ्क्यम्, ज्ञानान्तरासिद्धेरित्याह । संवेदनं त्विति । प्रकाशान्तरहेतुत्वेऽनवस्थाप्रसङ्ग इत्याह । न प्रकाशान्तरेति । तस्माद् द्वितीयः परिशिष्यतइत्याह । अत इति । प्रदीपे चक्षुरादिवैलक्षण्याऽसिद्धिमाशङ्क्याह । न चेति । प्रदीपस्य ज्ञानकरणत्वे प्रमाणाऽभावादित्यर्थः । अनुभवाऽजनकत्वे प्रदीपस्य कथं प्रकाशत्व?मिति शङ्कते । किं त्विति । प्रकाशकत्वमन्यथापि भवतीत्याह । पृथगिति । ज्ञानप्रकाशितं प्रदीपप्रकाशितमित्यनु-

प्रकाशाऽविशेषे कथं प्रकाशकत्वपृथक्त्वौ तत्राह । तथा हीति । यत्
प्रकाशकं तदनुभवनिमित्तमिति यथा संविदिन्द्रियभिचरति तद्वदनुभ-
वाऽतिरिक्तस्यालोकस्यापि ज्ञानजननं विना तमोनिवर्तनेन प्रका-
शकत्वं स्यादित्यर्थः । तर्हि प्रकाशकत्वाच्चक्षुषोऽपि तथात्वमि-
त्याशङ्क्याह । न तदिति ।

उभयमज्ञाननिवृत्तितमोनिवृत्त्याख्यं तर्हि भासमानमेव भानं
भासकमस्त्वित्याशङ्क्य किं परत, उत स्वतः? नाद्य इत्याह । तस्मा-
दिति । प्रकाशादिनिमित्तमित्युक्ते अप्रकाशमानस्य निमित्तत्वाङ्गी-
कारात्सिद्धसाध्यता, तदर्थं प्रकाशमानइति । एतावत्युक्ते ज्ञाना-
न्तरप्रकाश्यत्वाच्च स्वप्रकाशत्वमित्यर्थान्तरता, तदर्थं सजातीयेति ।
सजातीयप्रकाशनिरपेक्ष इत्युक्ते चक्षुरादिवदप्रकाशमानस्य व्य-
वहारनिमित्ततया अस्वप्रकाशत्वेन अर्थान्तरता, तदर्थं प्रकाश-
मानइति । विषयिणि व्यवहारनिमित्तत्वे व्यभिचारपरिहारा-
र्थमाह । विषयइति । चक्षुषि व्यभिचारनिवारणार्थम् अव्य-
वधानेनेति । प्रदीपस्य चाक्षुषप्रकाशसापेक्षत्वेन साध्यवैकल्य-
माशङ्क्याह । न चेति ।

आलोकः किं तमोविरोधित्वलक्षणप्रकाशत्वसिद्धये चाक्षु-
षप्रकाशमपेक्षते, उताऽज्ञानविरोधित्वलक्षणज्ञानप्रकाश्यत्वार्थ?-
मिति विकल्प्य प्रथमं प्रत्याह । स्वयमिति । प्रकाशगुणत्वेन
तमःप्रसक्त्यभावाच्च तन्निवृत्तावन्याऽपेक्षा, स्वरूपेण तन्निवर्तन-
समर्थत्वाच्चेत्यर्थः । द्वितीयमनुवदति । तद्विषयेति । अस्मिन्
पक्षे न साध्यवैकल्यमित्याह । तथापीति । ज्ञानोत्पत्तौ प्रदी-
पश्चक्षुरपेक्षतइत्याशङ्क्य प्रदीपस्य विजातीयज्ञानाऽपेक्षा । ज्ञानं च-
क्षुरपेक्षतइति प्रदीपस्य सजातीयनैरपेक्ष्यमित्याह । इति न सजा-
तीयेति । न द्वितीयः, जडत्वोपक्रमविरोधात् । तस्माज्ज्ञानं ...

प्रत्यक्षं सूक्तमित्याह । तस्मादिति ।

चेतनस्तद्बलेनेत्यत्र तच्छब्देनाचेतनपरामर्शशङ्का स्यात् । तथाऽनुभववैयर्थ्यं दुष्परिहरमित्याशङ्क्याह । नन्विति । न च प्रमातुः स्वप्रकाशत्वेनाऽनुभवनैरपेक्ष्यमिति वाच्यम् । वेदान्तिसांख्यमते स्वप्रकाशस्याप्यनुभवाऽपेक्षादर्शनादिति भावः । आत्मविषयकोरुभयोरप्यनुभवाऽधीनत्वशङ्कायामात्मन एव तदधीनत्वं कस्मान्निरस्यते?इत्याशङ्क्याऽऽत्मनो विषयोपरागहेतुत्वादनुभवस्य तत्प्रकाशकत्व,मुत साक्षात्? नाऽन्त्यो,ऽनुपपत्तेरित्यभिप्रेत्याऽऽद्यमङ्गीकरोति । तत्र यदीति ।

चेतयतेः फलत्वात्कथमनवस्थेत्याशङ्क्य किं चेतयतेरपि जडत्वमुताऽजडत्वम्? अन्त्ये पूर्वस्यैव जडत्वमस्तु किं संविदन्तरेण?-इत्यभिप्रेत्याऽऽद्यं दूषयति । चेतयतिक्रियेति । चेतयतेर्जडत्वे वैयर्थ्यपरिहारार्थं वस्तुवैव चेतयत्यन्तरमाश्रीयतइति वक्तव्यं,ततश्च तस्यापि चेतयत्यन्तरमित्यनवस्थेत्यर्थः । उभयोरजडत्वे ऽनुभवनैरपेक्ष्यमुक्तं, तत्र हेतुमाह । उभयेति । आत्माऽनुभवौ नान्योन्याऽधीनसिद्धिकौ, चित्स्वभावत्वात् पुरुषद्वयवदित्यर्थः । तत्रैव दूषणान्तरमाह । नापीति । किं संविदात्मसंबन्धः स्वेन गृह्यते उताऽन्येन? नाद्यः । स्वग्रहणमन्तरेण स्वप्रतियोगिकसंबन्धग्रहणाऽसंभवात् । स्वग्रहणे च विषयत्वप्रसङ्गः । नापि द्वितीयः । आत्मग्रहणमन्तरेण तद्विशेषितसंबन्धग्रहणाऽयोगात् तद्ग्रहणं वाच्यम् । न च तद्युज्यते, स्वप्रकाशत्वविरोधादित्यर्थः ।

आत्मा चिद्रूपस्तथापि न स्वप्रकाश इत्युक्तिर्विरुद्धेत्याशङ्क्य तात्पर्यमाह । नन्विति । चिद्गुणमिति । चिद्रूपमित्यर्थः । चित्प्रकाशत्वे ऽप्यात्मनो ऽस्वप्रकाशत्वं पुरुषान्तरसंवेदनवदित्युक्तं, ततश्च विशेषे हेतुर्वाच्य इत्यप्युक्तमित्याशयेनाऽऽत्मनो ऽन्या-

ऽपीत्यप्रकाशत्वे ऽनुभवस्यापि तथात्वमित्याह । अनुभवो ऽपीति । पुरुषान्तरसंवेदनस्य व्यवहितत्वान्न मनुष्यान्तरं प्रति स्वप्रकाशत्वमनुभवस्य तद्वैपरीत्यात्स्वप्रकाशत्वमित्याह । अव्यवधानादिति । तुल्यमुत्तरमित्याह । आत्मनीति । परात्मनस्तु व्यवहितत्वान्न स्वप्रकाशत्वं,स्वात्मनस्त्वव्यवहितत्वात्स्वप्रकाशत्वमित्यर्थः । तृतीयमुत्थापयति । अस्त्विति ।

संविदः स्वप्रकाशत्वेन कथमात्मनस्तदापादनं वैयधिकरण्यादित्याशङ्क्याह । अयमर्थ इति । गुण इति तार्किकप्राभाकरदृष्ट्योक्तं, द्रव्यं सांख्यमतमनुसृत्य, कर्मेति भाट्टमताऽनुसारेण । गुणत्वपरिशेषार्थमन्तिमं निरस्यति कर्मत्वइति । क्रियात्वे गम्यादिवत्संवेदनस्य प्रकाशत्वं न संभवति । न च प्रमाणफलत्वात्प्रकाशत्वमित्यपि वाच्यम् । कर्मत्वे फलत्वस्याप्यनुपपत्तेरित्यर्थः । मध्यमं निरस्यति । द्रव्यत्वइति । परिमाणानामित्यत्र मध्यइति द्रष्टव्यम् ।

हरिचन्दनबिन्दोर्गात्रैकदेशस्थस्यापि सर्वाङ्गीणाह्लादहेतुत्ववदेकदेशसंसृष्टस्यापि ज्ञानस्य सकलभासकत्वं किं न स्यादित्यत्राह । न हीति । प्रकाशसंसर्गो हि प्रकाशमानत्वम् । न चाण्वात्मसंवेदनस्य सकलसंसर्गः, इतरथा खद्योतप्रकाशसंसर्गात् घटस्य सर्वात्मना भानं स्यात् । हरिचन्दनबिन्दोस्तु सावयवत्वेनाऽवयवप्रसर्पणद्वारा व्यापिकार्यहेतुत्वं युक्तमित्यर्थः ।

अनन्तपरिमाणं ज्ञानमिति पक्षं निरस्यति । महापरिणामत्वइति । मध्यमं दूषयति । मध्यमेति । कर्मत्वद्रव्यत्वयोरनुपपत्तावाद्यः शिष्यतइत्याह । गुणत्वइति । प्रकाशगुणस्य प्रदीपादेर्यथा सजातीयप्रकाशनिरपेक्षत्वं तद्वत्स्वप्रकाशसंविद्गुणस्याऽऽत्मनो ऽप्यन्यानिरपेक्षत्वमित्यर्थः । संवेदनस्य जन्यत्वादिदं भावि

ऽप्रकाशः स्यादित्याशङ्क्याह । स चेति । प्रागभावशून्यत्वादपि न तस्य जन्मेत्याह । आत्मनीति ।

मध्यमपरिमाणत्वपक्षमाश्रित्य शङ्कते । नन्विति । तर्ह्यवयव-पारतन्त्र्यं स्यादिति यत्तूक्तं न तदिष्टमित्याह । स्वाऽवयवेति । तर्ह्यात्मपारतन्त्र्यं न स्यादिति । तत्राह । आत्मेति । घटस्य भूतलान्यत्वात् तत्तन्त्रत्वं न तथा ऽत्रेत्याह । नेत्याहेति । अ-तिरेकवदनतिरेकेऽपि प्रमाणं पश्याम इति तत्राह । प्रदीपेनेति । प्रदीपेन प्रकाशितो घट इत्युक्ते तस्य यथा प्रकाशात्मकप्रदीपप्र-काश्यत्वं तद्वत् मया ऽवगतमित्यत्रापि अवगत्यात्मकस्य प्रकाश्य-त्वप्रतिपत्तेरात्मनश्चित्प्रकाशत्वमित्यर्थः । उक्तमर्थं विपक्षबाध-कमुखेनोपपादयति । अन्यथेति । काष्ठस्य ज्वालया प्रकाश्य-माने घटे॰काष्ठेन प्रकाशित इति यथोपचारस्तद्वदित्यर्थः ।

आत्मनः प्रकाशरूपत्वे प्रमाणस्योक्तत्वात्प्रश्नाऽनुपपत्तिरि-त्याशङ्क्याह । प्रमाणान्तरेति । मया गतो ग्राम इत्युक्ते स्वा-ऽन्यगमिक्रियाविषयत्वं यथा ग्रामस्य तद्वदवगतेः स्वाऽतिरिक्त-त्वे ऽपि मया ऽवगत इति व्यपदेशो युज्यत इति प्रमाणान्तरं वक्तव्यमिति चोद्यार्थः । प्रमाणान्तरजिज्ञासायां तदेव वक्तव्य किं जन्यत्वादिनिराकरणेनेत्याशङ्क्य तात्पर्यमाह । संवेदन स्येति । अत्रैषा योजना । आत्मा, ऽनुभवान्नातिरिच्यते, संवि त्कर्मत्वाऽनधिकरणत्वे सत्यपरोक्षत्वात्संविद्वदित्याह । आत्मा ऽनुभव इति । अनुभवत्वमात्मवृत्ति अनुभववृत्तित्वात् सत्ताव दिति वा प्रयोगः । भिन्नत्वाज्जनिविनाशत्वाच्च नाऽनुभवस्या ऽऽत्मरूपत्वमिति बाधकतर्कपराहतिमाशङ्क्याह । एकस्यापीति एकत्वं स्थायित्वं वा ऽसिद्धमित्याशङ्क्याह । संवेदनस्येति । सं वित् स्वान्तर्गणिकभेदशून्या, उपाधिमन्तरेणाऽविभाव्यमानभेद

त्वादाकाशवदित्यर्थः । जन्यत्वाभावे ऽपि तथैव प्रयोक्तव्यम् ।
विपक्षे बाधकमाह । अनुभवाऽधीनेति ।

अनुभवत्वमीक्षेतेत्युक्तं, तदिष्टमेवेत्याशङ्क्याह । सामान्येति । अनुभव एक एव ततश्चात्मेति योजना । अनुभवव्यक्तिभेदाऽभ्युपगमे ऽनुगतव्यवहारहेतुत्वेनाऽनुभवत्वमाश्रयणीयमिति गौरवं, व्यक्तयैक्ये तु लाघवं, व्यक्तेरैक्ये भेदप्रतिभासस्यौपाधिकत्वमिति कल्पनं तत्रापि समानमिति चेत् न । सामान्यविशेषभेदं परिकल्प्य सामान्यभेदप्रतिभासस्योपाधिकतायाः कल्प्यत्वात्तत्र कल्पना ऽधिका, तस्मादेक एवाऽनुभव इत्यर्थः । संवित्स्वप्रतभेदवती, प्रकाशात्मकत्वात् । प्रदीपवदित्याशङ्क्याह । स्वगतेति । अनुभवविरुद्धो हेतुरित्यर्थः ।

नष्टाऽनष्टयोरभेदाऽनुपपत्तेर्भेद इत्युक्तमयुक्तं, नष्टाऽनष्टविभागस्यैवाऽसिद्धेरित्याशङ्क्याह । ननु नीलेति । पीतसंविदो ऽभावादिति कोऽर्थः ? किं विशेषणव्यावृत्त्या विशिष्टव्यावृत्तिः, उत विशेष्यव्यावृत्त्येति । आद्ये न संविदभावः सिध्यति । द्वितीये त्वसिद्धिः, संविदो ऽन्यदापि दर्शनादिति समाधानग्रन्थार्थः । विधान्तरेण हेतुं समर्थयते । नन्विति । साधनोपादानाऽनुपपत्त्या संविज्जन्यत्वम् । अन्यथा साधवैयर्थ्यापातादित्यर्थः ।

अस्तु संविज्जन्म, तथापि पूर्वविनाशः कथमिति । तत्राह । संविदुदयेति । संविदः साधनाऽधीनत्वं त्वन्यथापि घटत इत्याशयेनाह । नेतरेति । अन्यथासिद्धिं व्यनक्ति । सिद्धस्येति । संविद उत्पत्तिकल्पनायां तस्याः जन्म-विषयोपरक्ताकारस्य चेति गौरवम् । अस्मन्मते तूपरागमात्रस्य जन्यत्वमिति लाघवमित्यर्थः ।

संविदां विद्यमानो ऽपि भेदो दोषान्न प्रतिभातीति सौ-
गताः कल्पयन्ति । ततश्च विशेषाऽप्रतिभानं न दोषायेति शङ्कते ।
सत्यपीति । उपाधिमन्तरेण भेद इति । स्वगतभेद इति यावत् । ५४।१८
भेदे सिद्धे सादृश्यकल्पना, तस्यां च सिद्धायां ततो भेदाऽधि-
गतौ भेदसिद्धिरिति इतरेतराश्रयप्रसङ्गान्नैवमित्याह । तान्निरा-
करोतीति । संविदि प्रकाशमानायां तद्गतस्य भेदस्यापि प्रकाश-
मानत्वात्तद्ग्रहणानुपपत्तेरित्युक्तं, तदनुपपन्नं, दूरात्तरौ प्रतीयमाने
ऽपि तद्भेदाप्रतिभासवत् भेदाऽप्रथने ऽप्यनुपपत्त्यभावादित्या-
शङ्क्य तात्पर्यमाह । किं चेति ।

अप्रकाशनस्याऽनुभवसिद्धत्वान्न तत्र प्रमाणाऽपेक्षा, तत-
श्चाऽभिहितमित्युक्तमयुक्तमित्याशङ्क्याऽग्रहणे न प्रमाणोपन्यासः
किं तु तद्ग्रहणप्रतिबन्ध इत्याह । एकत्वेनेति । संविद्भेदप्रकाश-
प्रतिबन्धे प्रमाणाऽभावो ऽसिद्ध इति चोदयति । नन्विति ।
बुद्धिवेद्यत्वादित्युक्ते घटादौ व्यभिचारः, तदर्थं प्रकाशेति विशे-
षणम् । प्रकाश इति बुद्धिः प्रकाशबुद्धिः, तद्वेद्यत्वादित्यर्थः ।
उत्पन्नमात्रविनष्टप्रदीपादिव्यावृत्त्यर्थं स्थायीति विशेषणम् । स्था-
यिबुद्धिवेद्यत्वादित्युक्ते घटादौ व्यभिचारस्तदर्थं प्रकाशेति ।
स्वरूपाऽसिद्धसाधनवैकल्ययोः परिहाराय बुद्धिग्रहणम् ।

के ते अनुभवयुक्ती यद्विरोध उद्भाव्यते? तत्राह । पूर्वाऽपरे-
ति । पूर्वाऽपरकालयोरेकरूपतया ऽनुभव इति यावत् । भेदस्य
स्वरूपत्वाद्वस्तुनि प्रतीयमाने भेदो ऽपि भासेत इत्याद्या युक्तिः ।
अनुभवाऽभिन्नत्वेनाऽऽत्मनः स्वप्रकाशत्वमुक्तं, तदेवोपसंहरणी-
यं, कस्मात्प्रमेयभेदोपाधिना ऽनुभवपदवाच्यत्वमुपसंहृयते? इत्या-
शङ्क्य तद्व्याकर्त्रीं शङ्कामाह । कथमिति । विषयाऽनुभव आग- ५४।२१
न्तुक आत्मा तु नित्य इति कथं तयोरेकत्वमित्यर्थः । स्वरूपेण

धिप्रयुक्तिरिति शङ्कते । ब्रह्मज्ञानस्येति । नित्यविधिप्रयुक्त- १६६।१३
त्वादावश्यकत्वं, काम्यविचारत्वादनावश्यकत्वमिति विरोध
इत्यर्थः । अतिप्रसङ्गेनोत्तरमाह । कर्मविचार इति । ब्रह्मवि-
चारस्य काम्यत्वेन नित्यविधिप्रयोगाऽयोगे काम्यज्योतिष्टो-
मादिवाक्यार्थविचारस्यापि नित्यविधिप्रयुक्तत्वं न स्यादि-
तरथा तस्यापि स्यादित्यर्थः । प्रकारान्तरेण ब्रह्मविचार-
स्य ऽध्ययनविधिप्रयुक्तिमाक्षिपति । स्यादिति । अध्ययन-
विधेः कर्मविचारे शमाद्याक्षेपकत्वस्याऽक्लृप्तत्वाद्ब्रह्मविचार-
स्य च शमादिना विना ऽयोगात् साङ्गविध्यन्तरं प्रवर्तकमा-
श्रयणीयमित्यर्थः ।

कर्मविचारे ऽध्ययनविधेः शमाद्यङ्गाऽनाक्षेपकत्वे ऽपि
ब्रह्मविचारे भापकत्वं किं न स्यादिति समाधत्ते । सो ऽय-
मिति । अनिरूपितविधिव्यापारत्वमेवाह । स्वाध्यायेति ।
शिरोव्रतं नाम शिरसि अङ्गारपात्रधारणम् । यस्य यत्प्रयुक्तौ
यदङ्गाऽपेक्षा न तस्य तदन्यप्रयुक्तौ तदङ्गापेक्षेत्यत्र निदर्श-
नान्तरमाह । विचारं चेति । दृष्टतयेति । दृष्टफलरूपनिर्णया-
ख्योपकारद्वारेणेत्यर्थः । तत्रैव दृष्टान्तान्तरमाह । दर्शपूर्णमा-
सेति । यावज्जीववाक्ये होमस्याऽवश्यकर्त्तव्यतोपलभ्यते, तथा
कस्य चिदङ्गस्य वैकल्येन प्रधानानिर्वृत्तौ प्रधानवाक्यं निरु-
ध्यते, तस्मान्नित्यविधिर्यथाशक्त्यङ्गोपसंहारेणानुष्ठापयति, का-
म्यविधिस्तु विपरीतः, यथाशक्त्यङ्गानुष्ठाने प्रमाणाऽभावात् प्र-
धानवाक्यस्य च सकलाङ्गसंपत्तावनुष्ठाने ऽप्यविरोधादित्यर्थः ।

दृष्टान्तान्तरमाह । तथेति । स एव विधिरिति । दर्शपू-
र्णमासविधिरित्यर्थः । उपांशुयाजस्याऽऽज्यहविष्कत्वात्तद- १६६।१४
वेक्षणपर्यग्निकरणादिसंस्कारं दर्शपूर्णमासविधिराक्षिपति, आ-

ग्नेयाऽग्नीषोमीययोः पुरोडाशहविष्कत्वात्तत्प्रकृतिव्रीह्यादिष्ववघाताद्यङ्गमाक्षिपतीत्यर्थः । दृष्टान्तोक्तमर्थं दार्ष्टान्तिके
१६६।२५ समर्थयति । एवमिति । अध्ययनविधेः शमाद्याक्षेपकत्वमयुक्तं, शमादेरधिकारिविशेषणत्वेनाऽनुपादेयत्वादुपादेयस्यैव च विध्यनुष्ठेयत्वनियमादित्याशङ्क्याह । न चाऽधिकारीति । अनुपादेयत्वादसाध्यत्वादित्यर्थः । विचारस्याऽध्ययनविधिप्रयुक्तिं यो ऽङ्गीकुरुते ऽसावध्ययनविध्यधिकारिण, न विचाराधिकारमङ्गीकरोतीति न शमादीनामधिकारिविशेषणत्वमित्यर्थः ।

'शान्तो दान्त' इत्यादिवाक्यालोचनया ऽऽत्मविचाराधिकारिणः शान्त्यादिगुणकत्वप्रतिपत्तेः कथमितरस्याऽधिकार? इति चेन्मैवम् । पश्येदित्यनूद्य शान्त्यादिगुणको भवेदिति विध्यभ्युपगमान्नोक्तदोषप्रसक्तिरित्यभिसंधायोपसंहरति । तस्मादिति । दृष्टाऽदृष्टाङ्गानामिति । दृष्टाऽदृष्टातिशयहेतुत्वङ्गानामित्यर्थः । ब्रह्मविचारस्याऽध्ययनविधिप्रयुक्तिसमर्थनफलमाह । तस्मादिति । अध्ययनविधिप्रयुक्तावनुपपत्त्यभावस्तच्छब्दार्थः । युक्तत्वमेवाह । विचारादीनामिति । फलैक्यस्याऽसंभावितत्वात्प्रमाणविधुरत्वाच्च न धर्मजिज्ञासाऽनन्तरं ब्रह्मजिज्ञासेत्युक्तमुपसंहरति । तस्मादिति । जिज्ञास्यैक्यमुक्तं निराचष्टे । प्रतिवाक्यमिति । उपक्रमादिपर्यालोचनया पूर्वत्र धर्मस्य जिज्ञास्यत्वे उत्तरत्र ब्रह्मण इति प्रतीयतइत्यर्थः ।

इदमपरमित्यत्रापि हेत्वन्तरमुपन्यस्यतइति शङ्का स्यात्,
१६७।८ तां निराकरोति । एतदिति । चोदनाप्रवृत्तिभेदादित्यत्र प्रमाणे वैलक्षण्यमुक्तं न प्रमेये, इति वा शङ्कां निरस्यति । एतदिति । ब्रह्मचोदनेत्यत्र चोदनाशब्दस्य प्रमाणपरतया टीकाकृता व्या-

ख्यातत्वादत्रापि प्रमाणमात्रमुच्यतइति शङ्का स्यात्, तत्राह । चोदनेति । ब्रह्मणि भावनाया असंभवाच्चोदनाशब्दस्य १६७।८
प्रमाणपरत्वम्, अत्र तु तद्वैपरीत्यान्नैवमित्यर्थः । पुरुषस्य स्वतन्त्रत्वात्कथं चोदनाप्रेर्यत्वमुक्तमित्याशङ्क्याह । सा चेति । यद्यपि पुरुषः स्वतन्त्रः तथाप्यर्थभावनायाः फलशिरस्कत्वाद्धात्वर्थविषया प्रवृत्तिर्युक्तेत्यर्थः ।

अंशत्रयविशिष्टार्थभावनाऽप्रतिपत्तौ पुंसः प्रवृत्तिरनुपपन्नेत्याशङ्कायामसति विषये इत्युक्तं टीकायां, तदसंभवि, अर्थभावनाप्रतिपत्त्या प्रवृत्त्यनुपपत्तिचोद्ये ऽप्रतिपन्ने विषयइति वक्तव्यं, किमिदमुच्यते असतीति? विषयशब्दार्थश्च कः? इति न ज्ञायते, तत्राह । तस्मिन्निति । अर्थभावनारूपं भाव्यं विषयशब्दार्थः, स च तस्मिन्नित्यत्र तच्छब्देन निर्दिश्यते, असच्छब्दश्चाऽनवबोधपर इत्यर्थः । प्रमाणत्वाऽविशेषाद् ब्रह्मचोदनाया अपि प्रेरकत्वं स्यात्, इतरथा ऽन्यत्रापि तन्न स्यादिति शङ्कते । ननु ब्रह्मेति । अवबोधव्याप्तामिति । अवबोधविशेषितामित्यर्थः । अवबोधस्य भावनाविषयत्वमसिद्धं, येनाऽवबोधभावनायाः प्रतिपाद्यत्वमित्याह । नेत्याहेति । प्रागभाववत्त्वाद्यागवद्बोधस्यापि भाव्यत्वमिति शङ्कते । नन्ववबोध इति । वैषम्येणोत्तरयति । नेत्याहेति । टीकाऽपेक्षितं हेतुमाह । अनिच्छत् इति । अत एव प्रयत्नशून्य इत्याह । अप्रयतमानस्येति ।

अध्ययनधर्मजिज्ञासाकर्मानुष्ठानाऽऽनन्तर्यस्याऽथशब्दार्थत्वासंभवे ऽपि दृष्टस्यैव यस्य कस्य चिदानन्तर्यमथशब्दार्थ
इत्याशङ्क्याह । शास्त्रीयस्येति । श्रवणविधेः शास्त्रीयत्वाद- १६७।१६
धिकारनिमित्तमपि शास्त्रीयं वक्तव्यम्, अन्यस्य च शास्त्रीय-

स्याऽसंभवात्साधनचतुष्टयं शास्त्रीयमथशब्देन समर्पणीयमित्यर्थः। साधनचतुष्टयस्य कथं शास्त्रीयत्वमिति वीक्षायामाह। सो ऽन्वेष्टव्य इति। अन्वेषणं नाम शास्त्रयुक्तिभ्यामात्मतत्त्वनिर्द्धारणम्। साध्यस्वर्गादेरनित्यत्वे दृष्टान्त उच्यतइत्याह। तद्यथेति। कर्मणा निर्मितान् लोकाननित्यत्वेन विचार्य वैराग्यमधिगच्छेदित्यर्थः। स्रक्चन्दनादिसाधनजातस्य स्वशेषतया प्रियत्वात् तस्मिन् प्रीतिर्गौणी, स्वस्मिंश्च मुख्येति स्वमेवाश्रयेदिति। वैराग्य'मात्मनस्तु कामाये'त्यनेन दर्शितमित्यर्थः। शान्त इति। अन्तरिन्द्रियव्यापारोपरमयुक्त इत्यर्थः। दान्त इति। बाह्येन्द्रियव्यापारवर्जित इत्यर्थः। विशेषणत्रयस्य शास्त्रीयत्वेपि न मुमुक्षुत्वं शास्त्रीयं, तद्वाचकपदाऽभावादित्याशङ्क्याह। सर्वत्रेति। फलश्रुतय इति। 'ब्रह्म वेद ब्रह्मैव भवति' 'तरति शोकमात्मवि'दित्याद्याः। उक्तमर्थं विपक्षबाधकमुखेनोपपादयति। अन्यथेति। ब्रह्म वेदेत्यादेः कामनापनयनद्वारा ऽधिकारनिमित्तप्रतिपादकत्वाऽभावे फलसङ्कीर्त्तनं वृथा स्यात्ततश्चाऽधिकारनिमित्तसमर्पकत्वं वक्तव्यमित्यर्थः। ननु 'जिज्ञासस्वे'त्यादौ ज्ञानस्य विहितत्वात्कथं तत्प्रकरणपठितोपसदनादेर्विचारविध्यधिकारनिमित्तत्वं? तत्राह। ज्ञानस्येति।

(margin: १६७।१० beside line 3)

भिन्नप्रकरणपठितानां विशेषणानां कथं संभूयाऽधिका-
१६७।२५ रनिमित्तत्वं? तत्राह। तत्रेति। तत्र पूर्वस्मिन् तन्त्रे सर्वशाखाप्रत्ययाऽधिकरणनिर्दिष्टो यो न्यायस्तेनेत्यर्थः। सर्वशाखाप्रत्ययन्यायेनेति। अयमर्थः। किं शाखान्तरेषु श्रूयमाणमग्निहोत्रादि भिद्यते, उत न भिद्यतइति। भिद्यतइति तावत्प्राप्तम्, अभ्यासाद् यथा ऽभ्यासवैयर्थ्यं, तथा नामादेरपि भिन्नत्वं, तथा चोक्तं नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिप्रायश्चि-

त्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेद इत्येवं प्राप्ते राद्धान्तितम्, 'एकं वा संयोगरूपचोदनाख्याविशेषा'दिति । अस्याऽयमर्थः । फलसबन्धस्योभयत्राऽविशेषात्कर्मैक्यं, तथा द्रव्यं देवतोद्देशेन त्यागो यागस्वरूपं तदैक्याच्चैक्यं, तथा संज्ञैक्यात् जुहुयादित्यादि चोदनैक्याच्चैक्यम् । यत्र चैतेषां हेतूनाम् अभावस्तत्र क्रतुभेदः । तस्माच्छाखाभेदे ऽपि कर्मविधीनामैक्यम् । एवं भिन्नशाखागतविचारविधीनामप्यैक्यमिति । विध्यैक्ये ऽपि
कथमुपसदनादीनामधिकारनिमित्तत्वं? तत्राह । स चेति । १६७।१९
अधिकारमिति । विधिपुरुषसंबन्धनिमित्तमित्यर्थः । एकेन विशेषणेन विध्याकाङ्क्षालक्षणप्रकरणस्य चरितार्थत्वात्कथमितरेषाम् अधिकारनिमित्तत्वं? तत्राह । संकीर्तनेनेति । साधनचतुष्टयस्याऽधिकारिविशेषणतया प्रवृत्तिनिमित्तत्वं सङ्कीर्त्तनवैफल्याऽऽपातादधिकारिविशेषणत्वमेष्टव्यमित्यर्थः । प्रकरणसामर्थ्यादित्युक्तं विवृणोति । निरधिकारस्येति । विचारवाचकपदाऽभावात् जिज्ञासस्वेत्यादीनां कथं विचारविधिपरत्वमिति शङ्कते । नन्वेष्विति । न च ज्ञानस्याऽविधेयत्वादित्यनेनाऽस्य पौनरुक्त्यं, तद्विवरणरूपत्वादित्यर्थः ।

लक्षणया विचारस्य गम्यमानत्वात्तद्विधिपरत्वं युक्तमित्याह । उच्यतइति । अन्तर्णीत इति वाच्यार्थसंबन्धो निर्दिष्टः । मुख्यार्थाऽसंभवरूपं लक्षणाबीजमाह । इष्यमाणेति । मुण्डके विचारविधिं दर्शयति । तद्विज्ञानार्थमिति । साधनमन्तरेण ज्ञाननिष्पत्त्ययोगात्साधनविधिकल्पनमित्यर्थः । अङ्गविधिदर्शनाच्चाङ्गिविधिरस्तीत्याह । गुरूपसदनेति । तथा 'शान्तो दान्त' इत्यत्र विज्ञानविध्यसंभवात्साधनविधिः कल्प्यतइत्याह । आत्मन्येवेति । साधनचतुष्टयस्य श्रवणाधिकार- १६८

निमित्तत्वे ऽपि मनननिदिध्यासनयोः कथं साधिकारत्वमि-
त्याशङ्क्य तयोः श्रवणाङ्गत्वात्तदधिकारनिमित्तमेव तत्प्रवृ-
१६८।९ त्तिनिमित्तमित्याह । इति सर्वत्रेति । मुमुक्षुत्वे सतीतरधर्मा-
ऽभावाऽपराधेनाऽप्रवृत्त्यदर्शनाद्विशेषणान्तरं वृथेति शङ्कते ।
ननु फलेति । व्यतिरेकाऽभावमङ्गीकरोति । सत्यमिति ।
तर्हि विशेषणान्तरवैयर्थ्यं, तत्राह । शास्त्रीयइति । यत्रान्वयव्य-
तिरेकसिद्धमधिकारनिमित्तमिष्यते तत्र केवलव्यतिरेकोऽपे-
क्षा, यत्र शास्त्रादेवाऽधिकारनिमित्ताऽवगमः तत्र न व्यतिरेको
ऽर्थ्यते, यथा 'जीवन् जुहुयात्' 'गृहदाहवान् यजेते'त्यादौ व्य-
तिरेकविधुरस्यापि जीवनादेरधिकारनिमित्तत्वं तद्वदित्यर्थः ।

विशेषणचतुष्टयस्याऽधिकारनिमित्तत्वाभावे ऽपि सङ्कीर्तन-
मुपपद्यतइति चोदयति । ननु साधनेति । साधनकलापस्या-
ङ्गत्वमेव कल्प्यतामिति संबन्धः । विहितमङ्गं भवति, अत्र च
विध्यदर्शनात्कथमङ्गत्वमित्याशङ्क्याह । तत्र विधिमिति । जी-
वनादेर्वैलक्षण्यमाह । अनुष्ठेयतयेति । ज्ञानस्वरूपं प्रत्युपका-
राऽनिरूपणात्कथमङ्गत्वमित्यत आह । प्रयाजादिवदिति । अ-
ङ्गत्वमात्रमङ्गीकरोति । सत्यमिति । तर्हि नाऽधिकारिविशेष-
णत्वं, तत्राह । अङ्गस्यापीति । तत्र दृष्टान्तमाह । प्रदोषा-
दीति । प्रदोषकालवतः कर्मविधानात् तत्प्रतीक्षया कर्मकर-
णाच्चाङ्गस्यापि कालस्याऽधिकारिविशेषणत्वं यथा तद्वदत्रापि
अङ्गत्वमधिकारिविशेषणत्वं चाऽविरुद्धमित्यर्थः । प्रमाणाऽभा-
१६८।१४ वान्न साधनकलापस्याऽधिकारिविशेषणत्वमित्याशङ्क्याह । शा-
न्त्यादीति । तत्रैव दृष्टान्तान्तरमाह । दीक्षाया इति । दीक्षाया अ-
ङ्गत्वं 'दीक्षितो जुहोती'त्यधिकारिनिमित्तत्वं दृश्यतइत्यर्थः ।
शास्त्रीयत्वेन साधनचतुष्टयाऽधिकारिविशेषणत्वसमर्थनमुपसं-

हरति । तस्मादिति ।

उक्तं पुरस्तादित्यत्र शास्त्रारम्भस्य वैयर्थ्यस्याऽनुवादो वृथेत्याशङ्क्य तात्पर्यमाह । तेषु हीति । पूर्वत्र विशेषणचतुष्ट- १.६८।१५
यस्य शास्त्रीयत्वान्न व्यतिरेकाऽपेक्षेत्युक्तम्, अत्र त्वन्वयव्यतिरेकगम्यत्वमाश्रित्य व्यतिरेकः समर्थ्यतइति न पूर्वाऽपरपराहत्याशङ्केत्यर्थः । मुमुक्षुत्वाऽभावे ब्रह्मविचारप्रवृत्त्यसंभवसाधनफलमाह । तस्मादिति । मुमुक्षुत्वस्य हेतुत्वमाश्रित्य केवलव्यतिरेकाऽभावान्नेतरस्य हेतुत्वमित्याह । ननु फलकामनायामिति । न च फलसाधनविधावित्यनेन पौनरुक्त्यं शङ्क्यं, समाध्यन्तराऽभिधित्सायां पुरेरितस्यैवाऽनुवादादित्यर्थः । केवलव्यतिरेकाऽभावाद् विशेषणत्रयस्य प्रवृत्त्यनिमित्तत्वमुक्तमङ्गीकरोति । सत्यमिति । तर्हि तस्य वैयर्थ्यमित्याशङ्क्याह । पूर्वस्येति । उपाधित्वेनेति । हेतुत्वेनेत्यर्थः ।

नित्यवस्तुन एवाभावान्न नित्याऽनित्यवस्तुविवेक इति शङ्कते । ननु सर्वमिति । सर्वं विमतमित्यर्थः । विपक्षबाधकतर्केण पराहतत्वादप्रयोजकमित्याह । नेत्याहेति । कार्यस्य सोपादानत्वे तत्पर्यन्तो विनाशः स्यात्, न च सोपादानत्वं, प्रध्वंसे व्यभिचारादित्याशङ्क्याह । न चेति । प्रागसतः सत्त्वयोगित्वस्य कार्यत्वान्न प्रध्वंसे व्यभिचार इत्यर्थः ।

तर्हि कार्यमेव किं चिदुपादानं स्यादित्याशङ्क्य किं कार्यस्याऽन्विततयोपादानत्वम्, उताऽनन्विततयेति विकल्प्याद्यं प्रत्याह । कार्यस्येति । घटाऽन्वयित्वेन यदा मृदुपलभ्यते तदा तत्कारणमपि तत्रोपलभ्येत, एवं तत्कारणं तत्कारणमपीति सर्वस्यान्विततयोपलम्भः स्यादित्यर्थः । द्वितीयं दूषयति । अनन्वयिन इति । घटाऽनन्वयिनो दण्डस्य तदनुपादानत्व- १.६९।१

वस्तुवर्णादेरप्यनन्वयित्वेनोपादानत्वमित्यर्थः । तर्ह्यनाद्यनेक-
१६९।२ मुपादानं स्यादिति शङ्कां निरस्यति । अत इति । अना-
द्युपादानाऽभावे कार्याऽनुपपत्तिरतःशब्दार्थः । यदनाद्येकमु-
पादानं तत्परिणामि उपादानत्वात् क्षीरवदिति शङ्कां निर-
स्यति । तच्चेति । कौटस्थ्यप्रतिपादकश्रुतिस्मृतिविरोधान्नेद-
मनुमानमुत्तिष्ठतीत्यर्थः । तदेव स्पष्टयति । कूटस्थमिति । वि-
पक्षे बाधकमाह । अन्यथेति ।

ननु सर्वस्य विनाशे सिद्धे कूटस्थवस्तुपर्यन्तो विनाशः स्यात्, स एवाऽसिद्ध इत्याशङ्क्याह । तथेति । यथा कूटस्थवस्तुसिद्धिस्तथा सकलकार्यनाशो ऽपीत्यर्थः । कदा चिन्नश्यतीत्युक्ते न सकलविलयसिद्धिस्तदर्थं कार्त्स्न्येनेति । एतावत्युक्ते स्थितिसमये ऽपि कार्त्स्न्येन विनाशप्रसाधनाद् बाधस्तदर्थं कदा चिदिति विशेषणम् । प्रलयोपस्थापककर्मोद्बोध इत्यर्थः । ततः किमित्यत आह । इति सर्वस्येति । विपक्षे दण्डमाह । अन्यथेति । पूर्वकल्पस्येति । पूर्वकल्पीयस्येत्यर्थः । संस्काराऽभावे हेतुमाह । शून्यतेति । सजातीयाकारेण पुनर्जन्माभाववदित्ययमर्थः । पूर्वकल्पीयस्य संस्कारसहितकारणावशेषाऽभावात्सजातीयाकारेण पुनर्जन्माऽसंभवः, एवमेव वर्तमानस्यापि निर्लेपनष्टत्वात्सजातीयाकारेण जन्म न स्यादिति । अभिमुखविनाशदर्शनाद्धेतोर्भोगान् भुञ्जानस्येति यथास्थित्यन्वयशङ्कां निरस्यति । भोगानिति । यावदस्येत्यादेः साकाङ्क्षत्वाद्दूरान्वयत्वाच्चान्वयं दर्शयति । अत्रेत्यादिना । फलितं दर्शयति । साधनेति । व्यतिरेकमाक्षिपति । नन्विति ।

श्रवणाद्यनुष्ठाने ऽपि निर्विचिकित्सं ब्रह्म नाधिगच्छ-
१६९।१० तीत्येतद्विरुद्धमित्याशङ्क्याह । शूद्रेति । 'अधिकारिणः फल-

पर्यवसायिप्रमितिजनको वेद' इति न्यायादित्यर्थः । अन्वय-
मन्तरेण व्यतिरेकमात्राद्धेतुत्वाऽसिद्धेरन्वयस्य चाऽनिर्दिष्ट-
त्वाद्वर्णितवस्तुकलापानन्तर्यमित्यसंगतमित्याशङ्क्याह । व्य- १६९।१८
तिरेकेति । अन्वयव्यतिरेकाभ्यां साधनचतुष्टयस्य विचारहे-
तुतायाः समधिगतत्वात्तदानन्तर्यमथशब्दार्थ इत्युक्तं, तत्र वृ-
त्तानुवादपुरःसरं भास्करोक्तां शङ्कां निरस्यति । तदेवमि-
त्यादिना । तत्राऽस्तीति ग्रन्थे एवमुक्तेन प्रकारेण कल्पने हेतु-
माह । अनभिज्ञ इति । अनभिज्ञत्वमुपपादयति । शास्त्रार्थेति ।
जल्पनमेवाह । विचारकर्तव्यतामिति । न बुद्धिसमारूढा इ-
त्यत्र प्रमाणाऽभावादिति द्रष्टव्यम् ।

शास्त्रीयविधिप्रतिपत्तिसमये तदधिकारनिमित्तमपि बु-
द्धिस्थमित्यज्ञानादिदं चोद्यमित्याह । किलेति । मा भूद् बु-
द्धिस्थत्वं, तत्राह । न चेति । बुद्धिसमारूढमर्थं परस्मै प्रति-
पादयितुं तद्वाचकं शब्दं प्रयुङ्क्ते, शमादीनां चाऽबुद्धिस्थत्वात्
कथं तत्प्रतिपत्तिसमये तत्प्रतिपिपादयिषया ऽथशब्दप्रयोग
इत्यर्थः । परिशेषात् शमादिकं कथमथशब्दोपात्तमिति शङ्कां
निरस्यति । धर्मविचार इति । वेदैकदेशविचारस्य निर्वृत्तत्वात्
बुद्धिस्थत्वादधिकारविशेषणत्वेनोपादानमथशब्देनेत्यर्थः । श-
मादीनामबुद्धिस्थत्वमसिद्धमित्याह । नैतद्युक्तमिति । अयुक्तत्वं
दर्शयितुं सूत्रकारस्याऽनुसंधानकौशलमाह । तर्हीति । वि-
चारविधिसूत्रणसमये कथं तेषां बुद्धिस्थत्वम्? तत्राह । तथा ही- १७०।१
ति । निरधिकारस्य विचारविधेः प्रवर्तकत्वाऽभावादधिकार्य-
नुबन्धस्तावत् प्रतिपाद्यतइत्यर्थः ।

तत्र सर्वेषामधिकारित्वाऽभावादधिकारिविशेषणमाका-
ङ्क्षमाणो विधिप्रकरणपर्यालोचनया ऽन्वयव्यतिरेकाऽऽलोच-

नया च साधनचतुष्टयमधिकारिविशेषणत्वेनाऽधिगम्य तत्सू-
१७०।२ चितवानिति न किं चनात्राऽवद्यमित्याह। स्वप्रकरणेति। किं
च धर्मविचारस्याथशब्दोपात्तत्वं वदता इदं विचारणीयं, किं
साधनकलापस्य प्रवृत्त्यङ्गत्वमिष्यते, उत नेतीति । तत्रान्त्यं
प्रत्याह। किं चेति। आद्ये ऽस्मदभिमतसिद्धिरित्याह । अ-
वश्येति । शास्त्रीयाऽधिकारिविशेषणं नास्तीत्याशङ्कायां फ-
लपर्यन्तप्रवृत्त्यनुपपत्तौ तदुपपादनार्थमथशब्देनाऽधिकारिवि-
शेषणज्ञापनमुचितमित्यर्थः । स्वमतं प्रसाध्य परमतं निरस्य-
ति। न चेति । अन्वयव्यतिरेकसिद्धस्य शास्त्रीयस्य चाऽधि-
कारिविशेषणत्वं दृश्यते, धर्मजिज्ञासायाश्च विचाराधिकारिवि-
शेषणत्वे न दर्शनशास्त्रे स्त इत्यर्थः। धर्मविचारस्य बुद्धिस्थ-
त्वमुक्तं निरस्यति। अत एवेति। प्रमाणाऽभावो ऽतःशब्दा-
र्थः। न बुद्धिस्था ऽपीति। अधिकारिविशेषणत्वेन बुद्धिस्थे-
त्यर्थः। बुद्धिस्थत्वमङ्गीकृत्य दूषणमाह। व्यवहितादिति।

पुष्कलकारणानन्तर्यस्याऽथशब्दार्थत्वादतःशब्दो व्यर्थ
इति शङ्कते। नन्वथेति । अथशब्दस्यानन्तर्यमात्राऽभिधायि-
त्वादतःशब्दस्य हेत्वभिधायित्वान्न पौनरुक्त्यमिति शङ्कते ।
ननु हेतुत्वमिति। अनभिधेयत्वमङ्गीकरोति। सत्यमिति। तर्हि
न पौनरुक्त्यं, तत्राह। आर्थिकेति। अभिधेये तात्पर्याऽभावे
हेतुमाह । आनन्तर्येति । जिज्ञासापुष्कलकारणास्तित्वप्रति-
पत्तौ प्रवृत्तिसंभवादन्यथाऽसंभवादिति तत्र तात्पर्यमित्यर्थः ।
आर्थिकार्थतात्पर्येऽपि तस्याऽनभिधेयत्वान्न पौनरुक्त्यमित्यत्रा-
१७०।११ ह। यत्पर इति । तात्पर्यगम्यस्य प्रमेयत्वात् तस्य चैकत्वात्
पौनरुक्त्यमित्यर्थः।

आनन्तर्याऽभिधानमुखेन प्रतिपादितहेतुत्वस्फुटीकरणार्थो

ऽतःशब्द इत्येकदेशी शङ्कते । अतःशब्देति । मङ्गलार्थशङ्काया एवाऽत्राऽनवतारान्न तन्निरासायाऽतःशब्दो ऽर्थ्यतइत्याह ।
न निराकृतत्वादिति । मङ्गलस्य च वाक्यार्थसमन्वयाऽभा- १७०।१५
वादित्यत्र निरस्तत्वादित्यर्थः । अथशब्देनैव हेतुत्वसिद्धेरतःशब्दवैयर्थ्यमित्युक्ते दृष्टान्तमाश्रित्य शङ्कते । धर्ममीमांसायामिति । आनन्तर्याऽभिधानमुखेन स्वाध्यायाऽध्ययनस्य धर्मजिज्ञासाहेतुत्वमथशब्देनोक्तं यद्यपि तथापि अतःशब्दो यथोपात्तस्तद्वदत्रापीत्यर्थः । दृष्टान्ताऽसंमत्योत्तरमाह । अन्धेति । अन्धाया गोर्लाङ्गूलं तत्संबन्धी न्यायः, तथा स एव शरणं यस्य स तथोक्तः । अन्धः पुमान् यथा ऽन्धगोलाङ्गूलमाश्रित्य गच्छन्न स्वास्थ्यं लभते तद्वत् पुनरुक्तिदोषदूषितसूत्राऽवष्टम्भेन समादधानस्यापि तव न क्षेमप्राप्तिरित्यर्थः ।

एवमेकदेशिमतं निराकृत्य वैयर्थ्याशङ्कां पूर्वोक्तामुपसंहरति । तस्मादिति । सर्वज्ञबादरायणाचार्यनिर्दिष्टत्वादतःशब्दस्य वैयर्थ्याऽनुपपत्तेः स्वच्छान्तःकरणैस्तदर्थो निरूपणीयः, तत्र को ऽसावर्थ इति वीक्षायामपवादशङ्कानिरासद्वारा हेतुत्वदृढीकरणमर्थः । तस्मात्सूत्रकृद्वचो ऽनवद्यमिति समाधत्ते । अत्रेत्यादिना । अत्र सूत्रे शास्त्रान्वयव्यतिरेकाभ्यां साधनचतुष्टयस्य हेतुतायाः समधिगतत्वात्कथम् अपवादशङ्का? इत्याशङ्कायामाह । तत्र तामिति । ननु कृतकं परिच्छिन्नं च किं चिन्नित्यं दृष्टं यथा ध्वंसपरमाण्वादि, किं चिच्चाऽनित्यं दृष्टं यथा घटादि, कर्मफलं तु कं पक्षमवलम्बतामिति तत्राह । यदा त्विति । कर्मफलस्य नित्यत्वसंभावनया तत्रापि १७०।११
प्रवृत्तेर्न ब्रह्मण्येव प्रवृत्तिरित्यर्थः ।

नित्यत्वे प्रमाणाऽभावान्न कर्मफले प्रवृत्तिरिति शङ्कते ।

नन्विति । प्रमाणाऽभावो ऽसिद्ध इत्याह । तत्राहेति । ग्रामार्थिनः सेवायां सांग्रहण्यां च प्रवृत्तिवन्नित्यपुरुषार्थकामिनो
१७०।२६ ब्रह्मजिज्ञासायामपि प्रवृत्तिः स्यादिति शङ्कते । नन्वेवमिति । ब्रह्मव्यतिरिक्तस्याऽनित्यत्वज्ञानमन्तरेण सकलसुखविरोधिब्रह्मजिज्ञासायां न प्रवृत्तिरित्याह । तत्राहेति । अपेक्षितं पूरयति । तत इति । वैषयिकसुखे ऽवद्यदर्शनात्ततो विरागो युक्त इत्याशङ्क्याह । विरज्य चेति । चातुर्मास्यवदेव ब्रह्मज्ञानस्यापि नित्यफलत्वात्कदा चित्तत्साधने प्रवृत्तिर्युक्तेति शङ्कते । मा भूदिति । प्रत्यग्ब्रह्मैक्यस्याऽसंभावितत्वान्न तदर्थिनां श्रवणादौ प्रवृत्तिरित्याह । नेत्याहेति । न ब्रह्मैक्यं फलं किं तु तत्संयोग इति शङ्कते । ननु विरुद्धेति ।

विमुक्तौ स्रक्चन्दनादिसुखोपायाऽभावान्न तस्याः पुरुषार्थत्वमिति दूषयति । नेत्याहेति । मुक्तौ वैषयिकसुखाऽभावे ऽपि नित्यसुखसंभवात्पुमर्थत्वं युक्तमिति शङ्कते । ननु ब्रह्मेति । सुखस्य नित्यत्वमङ्गीकृत्य तस्य पुमर्थत्वं दूषयति । न स्वाश्रयेति । ततः किमित्यत आह । न चेति । प्रत्यग्ब्रह्मणोर्भेदाद्ब्रह्मसुखस्य जीवाश्रयत्वाऽनुपपत्तिरित्यर्थः । सुखापरोक्ष्ये स्वाश्रयसुखापरोक्ष्याभावेनाऽपुमर्थत्वाऽदर्शनान्न तस्य प्रयोजकत्वमिति शङ्कते । ननु सुखेति । विशेषणाऽयोगादिति । अयमर्थः । व्यवच्छेदकं विशेषणं भवति, व्यवच्छेदकत्वं चाऽतिप्रसक्तिशङ्कायां, न च प्रकृते सा समस्तीति न विशेषणं संभवतीति । तत्र वक्तव्यं, किं ब्रह्मसुखापरोक्ष्यं भोगः, उत स्वरूपसुखापरोक्ष्यं? नाद्य इत्याह । तथापीति । द्वितीयमुत्था-
१७१।१० पयति । नन्वात्मेति । आत्मा सुखस्वरूपः परमप्रेमास्पदत्वाद् व्यतिरेकेण दुःखवदित्यनुमानात् सुखस्वरूपत्वसिद्धिरित्यर्थः ।

अनुपलब्धिविरोधान्नैतदित्याह । न योग्येति ।

मुक्तौ सुखभोगाऽभावे ऽप्यात्यन्तिकदुःखोच्छित्तेः संभ-
वात् पुमर्थत्वमिति, तत्राह । न चेति । वैषयिकसुखदुःखसं- १७१।११
भिन्नत्वात्कथं तत्र प्रवृत्तिरिति शङ्कामुपसंहारव्याजेन निर-
स्यति । तस्मादिति । सकलसुखरहिताऽवस्थाप्राप्तेर्वरं दुःख-
संभिन्नस्यापि सुखस्य प्राप्तिस्तथा लोके दर्शनादित्यर्थः । अ-
तःशब्दस्य हेतौ प्रसिद्धत्वात्कथमिति प्रश्नाऽनवसरमाशङ्क्य
अभिप्रायं दर्शयति । तत्रोक्तेति । अग्निहोत्रादीनामनित्यफ-
लत्वे ब्रह्मणो ऽपि तत्फलत्वादनित्यत्वमित्याशङ्क्याह । ब्र-
ह्मेति । ब्रह्मणः कर्मफलत्वमसिद्धं कर्मणां विविदिषाफलत्वा-
दित्यभिसंधिः । 'अक्षय्यं ह वा' इत्यादिवाक्यात् कर्मफलस्य
नित्यत्ववत् तद्यथेति वाक्यादनित्यत्वस्यापि प्रतिपत्तेर्न नि-
त्यपुरुषार्थकामिनः कर्मफले प्रवृत्तिरिति चोद्यस्याऽऽभासत्व-
माशङ्क्य तात्पर्यमाह । ननु तद्यथेति । 'न हिंस्यात् सर्वा भूता-
नि' 'अग्नीषोमीयं पशुमालभेते'त्यनयोः सामान्यविशेषविषय-
तया व्यवस्थितिवत् अत्रापि व्यवस्थोपपत्तेः कर्मफले प्रवृ-
त्तिरुचितेत्यर्थः ।

नित्यत्वप्रतिपादकवाक्यस्याऽर्थवादस्याऽनुमानविरोधान्न
स्वार्थप्रतिपादकत्वं, ततश्च न सामान्यादिविषयत्वमित्युक्तं
न तस्येत्यत्र, तदनुपपन्नं, वेदवचनविरोधे ऽनुमानस्याऽऽभा-
सत्वात्, अविद्यमानार्थवादत्वं चासिद्धमित्याशङ्क्य वेदवचन-
स्यापि संदिग्धार्थत्वान्न बाधकत्वमित्याह । तत्र तावदिति । १७१।१८
तत्रेति । अक्षय्यं, हिरण्यदा, अपाम सोमं, स य, इत्यादिवाक्यानां
मध्ये इत्यर्थः । किं सुकृतशब्दः कर्मपरः, उत फलपरः ? त-
त्राद्ये न फलनित्यत्वसिद्धिरित्याशयेनोक्तं सुकृतस्याऽक्षय्य-

त्वमाहेति । द्वितीयं प्रत्याह । न तत्फलस्येति । सुकृतशब्दस्य कर्मणि रूढत्वादित्यर्थः । सुकृतस्याऽक्षयत्वमनुपपद्यमानं फ-
१७१।२० लनित्यत्वं कल्पयतीत्याशङ्क्याह । सत्यपीति । 'कदा चित्सुकृतं कर्म कूटस्थमिव तिष्ठति'ति न्यायात्सत्यपि कर्मणि फलाऽनुपभोगवत्तद्विनाशः किं न स्यादित्यर्थः । कर्मणां फलविनाश्यत्वात् फलोपभोगे ऽपि सुकृतस्याऽवस्थानकल्पनमनुपपन्नं, ततश्च फलमपि नित्यं कल्प्यतइत्याशङ्क्याह । तत्र वाक्यस्येति ।

वस्तुबलप्रवृत्तेत्यत्र किं तद्वस्तुबलमिति न ज्ञायते, तत्राह । व्याप्तीति । किं च नित्यत्वानित्यत्वप्रतिपादकयोः श्रुत्योरनित्यत्वप्रतिपादिकाया अनुमानाऽनुगृहीतत्वात् प्राबल्यमित्याशयेनाह । अनुमानेति । 'हिरण्यदा अमृतत्वं भजन्त'इत्यस्माद्वाक्यादमृतत्वं कर्मसाध्यं प्रतीयतइति चेत्, तत्र वक्तव्यं, किं यथाश्रुति श्रुत्यर्थः, उताऽन्यथेति? तत्राद्यस्तावदसमञ्जस इत्याह । हिरण्यदा इति । द्वितीयं प्रत्याह । भजिष्यतइति । 'अपाम सोममममृता अभूमे'त्यत्राऽमृतत्वं कर्मसाध्यं श्रूयतइत्याशङ्क्य किम् अमृतभावो देवभावः, उत ब्रह्मभावः? नाद्य इत्याह । अनुमानेति । नापि द्वितीयः, 'ब्रह्मैव सन् ब्रह्माप्येती'ति ब्रह्मभावस्य स्वतःसिद्धत्वप्रतिपत्तेरिति द्रष्टव्यम् ।

'न हास्य कर्म क्षीयत'इत्यत्रापि कर्मशब्दः किं पुण्यपरः, उत फलपर? इति विकल्प्यान्त्यं प्रत्याह । स य इति । कर्मशब्दस्य फले प्रसिद्धेरित्यर्थः । तथापि तत्परत्वं कल्प्यतइत्याशङ्क्याह । वाक्यस्येति । विरोधे ऽपि कल्पनं किं न स्या?-
१७२।१ दिति, तत्राह । अविरोधेति । आद्ये न फलनित्यत्वसिद्धिरिति द्रष्टव्यम् । उपासनास्तुतिपरत्वादपि 'न हास्येत्यादेर्न

कर्मफलनित्यत्वप्रतिपादकत्वमित्याह । किं चेति । अनेवंवि- १७२।१
दिति । ब्रह्म आत्मत्वेन यो न वेत्ति असावनेवंवित् । महदिति ।
अश्वमेधादिकं कर्म । अन्तत इति । फलोपभोगानन्तरमित्यर्थः ।
तत्रैषा ऽक्षरयोजना । न कर्म क्षीयतइत्येतदुपासनाकर्मप्रशंसा-
मात्रमुपादीयतइति तावत्संबन्धस्तत्र हेतुमाह । यदि ह वेति ।
ज्योतिष्टोमादेरुपासनाया अविशेषान्न कर्म क्षीयतइति कथमु-
क्तमित्याशङ्क्यास्ति फलतो विशेष इत्याह । आत्मोपासनेति ।
उपासनातः प्रत्यगेकाग्रचित्तस्योपदिष्टतत्त्वमस्यादिवाक्या-
त्साक्षात्कारजननादविद्यानिवृत्तेर्जननमित्यर्थः ।

फलत्वाद् ज्ञानफलमाक्षिपतीति शङ्कां निरस्यति । अ-
क्षयेति । प्रध्वंसत्वान्न क्षय इत्यर्थः । 'न हास्य कर्म क्षीयत'-
इत्येतन्नोपासनास्तुतिपरं, तद्बोधकशब्दस्याऽभावात्, ततश्चा-
ऽग्निहोत्रादेर्ज्ञानसमुच्चितस्य फलनित्यताप्रतिपादकमेतत्स्या-
दिति शङ्कते । अनेवंविद इति । एवं वेदाऽनुष्ठितस्याऽग्नि-
होत्रादेरेवाक्षयो विधीयतइति प्रथमं संबन्धः । नन्वत्रापि प्रा-
माण्याऽभावस्तुल्य इत्यत्राह । नैवंविद इति । ज्ञानाऽभावे
ऽअश्वामेधादिकर्मक्षयं निर्दिश्य ज्ञाने कर्म न क्षीयतइत्युक्ते
ऽश्वमेधादेर्बुद्धिस्थत्वात्तस्यैव निर्देश इत्यर्थः । यद्यप्यश्वमेधा-
देर्बुद्धिस्थत्वं तथापि मुक्तिफलतया तन्नित्यत्वप्रतिपादनम-
युक्तं, श्रुत्यन्तरविरोधादित्याह । न लिङ्गस्येति । कर्मफल-
नित्यत्वे प्रमाणाऽभावसमर्थनफलमाह । तस्मादिति । नि-
त्यपुरुषार्थकामिनः कर्मणीवं श्रवणादावप्यप्रवृत्तिर्ब्रह्मभावा-
द्यसंभवादिति यत्तूक्तं तदनुवदति । ननु वोपस्येति । मुमुक्षु- १७२।१०
त्वमेतच्छब्दार्थः ।

'ब्रह्मविदाप्नोति पर'मित्यर्थः किं तत्संयोगः फलत्वे-

नोच्यते, उताऽभेदः? नाद्यो ऽनङ्गीकृतेरनुपयोगाच्चेति । न द्वितीयः। विरुद्धत्वाद्दहनतुहिनत्ववदित्याशङ्क्य द्वितीयं कल्प-
१७२।११ मादायोत्तरयति । विरुद्धेति । अबाधितविषयत्वस्याऽनुमानसामग्र्यन्तर्भावादत्र च तदभावान्नाऽनुमानोदय इत्यर्थः । योग्यताऽनुसारेण श्रुतिरर्थं बोधयति, प्रत्यग्ब्रह्मणोश्च तादात्म्याऽनर्हत्वात् कथं तत्तादात्म्यं श्रुतिर्बोधयेत्, कुतस्तरां वा विरोध? इत्याशङ्क्य विरोधांशपरित्यागेनैक्यबोधकत्वं युक्तमित्याह । किं त्विति । तादात्म्यसंभवे ऽपि न तस्य पुमर्थत्वं सुखभोगाऽभावादित्युक्तमपवदति । न चेति । किं वैषयिकसुखस्याऽननुभव, उत ब्राह्मस्य? तत्राद्यमङ्गीकृत्य द्वितीयं प्रत्याह । ब्रह्मेति ।

स्वरूपसुखाऽनुभवस्य पुरुषार्थत्वमाक्षिपति । ननु तादात्म्यइति । आनन्दात्मब्रह्माऽभिन्नतया स्वस्याप्यानन्दरूपत्वादहं सुखमित्युपलम्भः स्यादित्यर्थः । व्यावर्त्यमंशमाह । नाहं सुखीति । अस्तु को दोष? इत्यत्राह । अहं सुखीति । सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वसंभवे सुखसंबन्धस्यापि पुरुषार्थत्वप्रयोजकत्वकल्पनायां गौरवान्नैवमित्याह । नैष इति । लाघवात् सुखापरोक्ष्यमात्रस्य पुरुषार्थत्वाश्रयणं, तत एव न परोक्षस्यापि पुमर्थत्वमिति शङ्कते । ननु स्वाश्रयमिति । अनधिगतमन्दिरमध्यनिखातनिध्यादेः पुरुषार्थत्वाऽदृष्टेर्ज्ञायमानस्य पुरुषार्थत्वं वक्तव्यमित्याह । नोपलब्धानामिति ।

सुखसंबन्धस्याप्यनुभूयमानत्वादेव पुरुषार्थत्वं वदन्तं
१७२।१८ प्रत्याह । तत्रेति । अनुभवमात्रेण पुरुषार्थत्वे पारतन्त्र्यादेरपि पुरुषार्थत्वप्रसङ्ग इत्यर्थः । आगन्तुकसुखाभावे ऽपि नित्यसुखाऽनुभवान्मुक्तेः पुमर्थत्वमुक्तं, तदाक्षिपति । नन्विति ।

प्रमाणाऽभावादित्यर्थः । सुखस्यागन्तुकत्वे मानाऽभावान्नि-
त्यत्वं सेत्स्यतीत्याशयेनाह । सत्यमिति । नैयायिकादिभि- १७२।११
रुक्तमित्येतत्सत्यमित्यत्राङ्गीकृतमिति द्रष्टव्यम् ।

मानाभावो ऽसिद्ध इति शङ्कते । ननु साधनेति । नित्यत्वे साधनवैयर्थ्याज्जन्यत्वमेष्टव्यमित्यर्थः । साधनोपादानमन्यथापि घटते इत्याह । न सिद्धस्येति । साधनस्याऽभिव्यञ्जकत्वं कस्मा,दुत्पादकत्वमेव किं न स्या?दित्यत्राह । अन्यथेति । कल्पनागौरवपरिहाराय सुखसाधनस्याऽभिव्यञ्जकत्वमाश्रीयते चेत्तर्हि दुःखसाधनस्यापि व्यञ्जकत्वमेव स्यादित्याशङ्क्य दुःखनित्यत्वे मानाभावादितरत्र च तत्सद्भावाद् वैपम्यमित्याशयेनाह । साध्यान्तरेति । आत्मा सुखरूपः प्रत्यक्षेणाऽवभासतइति संबन्धः । सुखपरामर्शाऽनुपपत्तिगम्यसौषुप्तसुखानुभवः प्रत्यक्षशब्दार्थः ।

न केवलं प्रत्यक्षात्मस्वरूपत्वं किं त्वनुमानादपीत्याह । निरुपाधिकेति । आत्मा सुखरूपो निरुपाधिकप्रेमास्पदत्वात् व्यतिरेकेण दुःखवदित्यर्थः । निरुपाधिशब्दार्थमाह । साध्यान्तरेति । साध्यान्तराशेषत्वम्, अनन्यार्थत्वमित्यर्थः । तच्च विशेषणं सुखसाधनव्यावृत्त्यर्थम् । सुखरूपत्वे हेत्वन्तरमाह । अव्यभिचारितयेति । तदुपपादयति । सुखदुःखेति । सुखावस्थायां दुःखावस्थायां च प्रेमास्पदतया ऽऽत्मनः सुखाव्यभिचारः । तथा च प्रयोगः, सुखमात्मनो न भिद्यते तदव्यभिचारित्वात् यद्यन्न व्यभिचारि तत्ततो न भिद्यते यथौष्ण्यमग्न्यव्यभिचारीत्यर्थः । तच्छब्दार्थमाह । यस्मादिति ।
इच्छाया विषयसौन्दर्यलभ्यत्वाज्जिज्ञासा कर्तव्येति कथमुक्त?- १७३।१
मित्याशङ्क्याह । तत्रेति । इच्छायां प्राधान्यात्तामनतिक्रम्य

विचारं च लक्षणया आदाय जिज्ञासा कर्तव्येत्युक्तवानित्यर्थः ।

यतो द्वैताऽनुषङ्गादित्यत्र साधनचतुष्टयस्य हेतुत्वं प्रतिपाद्यते, तच्च पूर्वोक्तमिति वृथा ऽयं ग्रन्थ इत्याशङ्क्य वृत्तानु-
१७३।४ वादपूर्वकं तात्पर्यमाह । साधनेति । धर्मजिज्ञासोत्तरकालमनुष्ठितनित्यनैमित्तिकर्मभिरुत्पन्नविविदिषस्य श्रवणादिप्रवृत्त्यङ्गीकरणात् धर्मजिज्ञासाया अपि हेतुत्वमिति शङ्कते । नन्विति । जन्मान्तराऽनुष्ठितधर्मजिज्ञासाया अप्युक्तविधया प्रवृत्तिसंभवान्न समानजन्माऽनुष्ठितधर्मजिज्ञासाया हेतुत्वमित्याह । नेत्याहेति । प्रमाणाऽभावादपि न धर्मविचारस्य हेतुत्वमित्याह । आगमेति । 'परीक्ष्य लोकान् कर्मचिता'नित्यादिरागमः । साधनचतुष्टयाऽभावे ब्रह्मजिज्ञासाऽनुपपत्तिरर्थापत्तिः । षष्ठीसमासस्याऽसूत्रार्थत्वाद् ब्रह्मणो जिज्ञासेत्येतदभाष्यमित्याशङ्क्याह । ब्रह्मण इति ।

आक्षेपसमाधानपूर्वकं भाष्यत्वं दर्शयितुम् आक्षेपं तावदाह । ननु धर्मायेति षष्ठीचतुर्थीसमासयोरपि संभवात् षष्ठीसमासः कस्मादाद्रियते? प्राचि तन्त्रे चतुर्थीसमासपरतया सूत्रस्य माख्यातत्वादत्राप्येवमेव युक्तमित्यर्थः । प्राचस्तन्त्राद्वैपम्यान्नैवमित्याह । तत्राहेति । इच्छायाः प्राधान्ये ऽपि चतुर्थीसमास एव किं न स्यादिति, तत्राह । इच्छेति । जिज्ञासाया इच्छाप्राधान्यउपगते कर्मणि षष्ठीसमासः स्यादिति संबन्धः । तत्र हेतुरिच्छाया इति । इच्छायाः सकर्मकत्वादपेक्षितं कर्म षष्ठ्योच्यतइत्यर्थः ।

प्रयोजनमपि वक्तव्यम्, इतरथा प्रवृत्त्यनुपपत्तेरित्याशङ्क्य
१७३।११ यदिष्यमाणं तदेव प्रयोजनमित्याशयेनाह । कर्मप्रयोजनयोरिति । ननु कर्मप्रयोजनयोरैक्यमाश्रित्य कर्मणि ष-

ऽभ्यङ्गीक्रियते चेत् तर्हि प्रयोजनविवक्षया चतुर्थीसमासोप-
गमे किं न कर्म सिध्यतीति चतुर्थी समासः किं न स्यादिति
शङ्कायामाह । प्राधान्यादिति । इच्छायाः कर्मजन्यत्वात् प्र- १७३।११
थमाऽपेक्षितकर्मकारकनिष्पन्नस्य प्रयोजनापेक्षेति कर्मणः प्रा-
धान्यमित्यर्थः । तर्हि शबरस्वामिनापि कर्मणि षष्ठी कस्मान्ना-
श्रिता? तत्राह । विचारेति । विचारः कर्तव्य इत्युक्ते कस्ये-
त्यपेक्षायां वेदविचार इति वेदः कर्मत्वेन संबध्यते, कस्माइति
वीक्षायां धर्मायेति धर्मः प्रयोजनत्वेन संबध्यते, इत्येवं कर्म-
प्रयोजनभेदात् प्रयोजनिर्देशं चान्तरेण क्लेशात्मके प्रवृत्त्यसंभ-
वाच्च प्रयोजनविवक्षया चतुर्थीसमास इत्यर्थः ।

ब्रह्मणो जिज्ञासाकर्मत्वमाक्षिपति । ननु किं तदिति । बृहत्त्वाद्ब्रह्मेति । जीवस्य ब्रह्मशब्दार्थत्वात्तस्य चाऽसंदिग्धत्वान्न कर्मत्वमित्यभिसंधिः । जगज्जन्मादिकारणस्य ब्रह्मशब्दार्थत्वात् जीवस्य चाऽतादृत्कान्न ब्रह्मत्वमित्यभिप्रायेणाह । तदाहेति । ब्रह्मशब्दस्य जात्याद्यर्थत्वं वृत्तिकृता निराकारि, तदनुचितं, जात्यादावपि ब्रह्मशब्ददर्शनादित्याशङ्क्याह । तत्र यदन्यैरिति । जात्यादेर्न सर्वत्र ब्रह्मशब्दार्थत्वं निराक्रियते किं त्वथातो ब्रह्मजिसेत्यत्र ब्रह्मशब्दस्य तदर्थत्वं निरस्तमित्यर्थः । कर्मणि षष्ठीसमासमाश्रित्य प्रधानब्रह्मजिज्ञासयाऽर्थादप्रधानजिज्ञासेत्युक्तं, तत्र वैपरीत्यशङ्कां निरस्यति । तत्र ब्रह्मण इत्यादिना । शेषषष्ठीपक्षे ऽपि ब्रह्मणः कर्मत्वं सिध्यति संबन्धसामान्यस्य विशेषनिष्ठत्वादित्युक्तं वृत्तिकृता, तदनुपपन्नं, षष्ठी शेषे इति शेषत्वं षष्ठ्या अभिधाय कश्च शेष इति वीक्षायां कर्मादिभ्यो ऽन्यः स्वस्वाम्यादिसंबन्धः शेष इत्य-
भिधानादित्याशङ्क्याह । शेष इति । व्यावर्त्यमाह । न कारके- १७३।२१

ति । कर्मकरणसंप्रदानाऽपादानाऽधिकरणानि कारकपञ्चकशब्दार्थः ।

संबन्धविशेषाणां स्वस्वाम्यादीनां व्यभिचारित्वात् षष्ठ्यर्थत्वाऽनुपपत्तेः संबन्धमात्रं शेषः, तस्मिन् षष्ठीति पक्षे स्वस्वाम्यादिसंबन्धः शेष इति वृत्तिकृद्वचनं कथमित्याशङ्क्य
१७३।२२ तात्पर्यमाह । तत्र यथेति । देवदत्तस्येति षष्ठ्या निर्दिष्टस्य संबन्धमात्रस्य विशेषाऽकाङ्क्षायां स्वमिति पदसमभिव्याहारात् षष्ठी स्वस्वामिसंबन्धान्वितसंबन्धमात्रं यथा ऽभिधत्ते तथा देवदत्तस्य गच्छतीत्युक्ते न षष्ठ्या कारकसंबन्धविशेषसंसृष्टाभिधायित्वं, संबन्धविशेषस्य तत्राऽप्रतीतेरित्यर्थः । कथं तर्हि संबन्धविशेषप्रतिपत्तिरिति शङ्कते । किं त्विति । अपर्यवसानवृत्त्येत्याह । अभिहितेति । अभिहितं यत् संबन्धसामान्यं तदेवार्थः, तद्बलादित्यर्थः ।

'तद्विजिज्ञासस्वे'त्यत्र कर्मविवक्षागमकाऽभावात्कथं तत्प्रतिपादकत्वेन सूत्रस्य श्रुत्या संगतिरित्याशङ्क्य तात्पर्यमाह । किं चेति । अधिकारश्च विषयश्चाऽधिकारविषयौ, ताभ्यां सह वर्ततइति स तथोक्तः । विचारविधेर्विषयं विना ऽनुपपत्तेर्ब्रह्मणः कर्मत्वं विवक्षितमित्यर्थः । श्रुतौ कर्मत्वाविवक्षायामपि कथं सूत्रे तद्विवक्षा? ऽत आह । सूत्रस्येति । विचारविध्यपेक्षितन्यायप्रतिपादकत्वात्सूत्रस्य तदेकार्थत्वमित्यर्थः । ब्रह्मप्रतिपत्त्यप्रतिपत्त्योस्तज्ज्ञानकामनाऽनुपपत्तेः ज्ञातुमिच्छा जिज्ञासेति भाष्यमनुपपन्नमित्याशङ्क्याह । ज्ञातुमिच्छेति । आक्षेपसमाधानपूर्वकं तदुपपादयितुमाक्षेपमाह । तत्राऽवगतेति ।
१७४।८ तत्र लोके इत्यर्थः । सुतरामिति । इच्छाकारणसद्भावे ऽपीच्छाया असंभवो यदा तदा कारणाभावे कार्याभाव इति किमु

वक्तव्यमित्यर्थः ।

अवगतिज्ञानयोर्भेदाऽभावात् ज्ञाते ऽप्यवगतिकामनेत्यु-
क्तमनुपपन्नमिति चोदयति । का चेयमिति । असिद्धो हेतु- १७४।८
रित्याह । तदाहेति । अपरोक्षपरोक्षप्रत्यययोर्भेदः प्रसिद्ध इ-
त्यर्थः । अपरोक्षे ब्रह्मणि शब्दादपरोक्षप्रथायाः प्रथममेवो-
त्पत्तेः सूत्रकामनाऽनुदय इति शङ्कते । ननु प्रथममिति । श-
ब्दस्य परोक्षज्ञानजननस्वाभाव्यात्कथं तत्परित्याग? इत्याह ।
तत्राहेति । ज्ञानं त्विति टीकायां शब्दादिति द्रष्टव्यम् । प-
रोक्ष इत्येतद्विवृणोति । अनुभवेति । शब्दात् परोक्षप्रत्ययो-
त्पत्तिप्रतिपादनफलमाह । शब्दादिति । अपरोक्षे परोक्षप्रत्य-
यजनकत्वे मिथ्याज्ञानजनकत्वेन शब्दस्याऽप्रामाण्यं स्यात्,
तस्मादपरोक्षप्रत्ययजनकत्वमेष्टव्यं, तथा च तत्र कामनाऽसंभव
इति शङ्कते । यदा पुनरिति । अपरोक्षतया प्रतिपन्ने ऽप्यप्र-
तिबद्धाऽपरोक्षप्रत्ययकामो युक्त इति परिहरति । तत्राहेति ।

ज्ञानेनाऽवगम्यते चेत् ब्रह्म कथं तर्हि अपरोक्षज्ञानमि-
ष्यतइत्युक्त?मित्याशङ्क्याऽपरोक्षनिश्चयजननद्वारा अवगम्यतइ-
त्याह । प्रमाणेनेति । ज्ञानशब्दार्थविप्रतिपत्तिदर्शनात्तन्निर्ण-
यार्थं चोद्यमुद्भावयति । नन्विति । ज्ञानशब्दस्य प्रसिद्धार्थ-
त्वात् न विमर्शसंभव इत्याशङ्क्य ज्ञानस्वरूपप्रसिद्धावपि तद्वि-
शेषांशे विप्रतिपत्तेर्विमर्शो युक्त इत्याह । संवेदनमिति । य-
त्प्रमाणफलं संवेदनं तदेव विज्ञानमिति संबन्धः । संवेदनस्य
फलत्वात् ज्ञानस्य तज्जनकत्वात् कथं तयोरैक्य?मित्याशङ्क्या-
ह । न चेति । आत्ममनश्चक्षुराद्यर्थसन्निकर्षस्योभयसंमतत्वा- १७५।१५
त्तत एव संविज्जननसंभवे कारणान्तरकल्पनमयुक्तमित्यर्थः ।

मतान्तरमाह । वार्त्तिककारीयाणामिति । जानामीति

ज्ञानमात्माश्रयतया ऽनुभूयते, स्फुरणं च घटधर्मत्वेन, ततः कथं तयोरैक्यमित्यर्थः । करणेति । ज्ञायते ऽनेनेति करणव्युत्पत्त्या वृत्तिर्ज्ञानं ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या संवित् ज्ञानमिति विभागः । एवं विप्रतिपत्तिं प्रदर्श्य तन्निराकरणार्थमुप-
१७४।१८ क्रमते । तत्र न तावदिति । आत्मनो ऽस्थायित्वात्कथं तत्र कर्तृव्यापाराधीनं फलमिति मन्वानं सुगतं प्रत्याह । स्थायिनीति । कल्पनागौरवप्रसङ्गान्न कर्तृव्यापार एष्टव्य इतिशङ्कते । ननु यत इति ।

किं व्यापारः परिस्पन्दः, उत परिणामः? नाद्यः । आत्मनः सर्वगतत्वादित्याह । आत्मन इति । न द्वितीयोपि, तत्र प्रमाणाऽभावादित्यर्थः । प्रामाणिककल्पनाया अदोषत्वान्मैवमित्याशयेनाह । अयमत्रेति । व्याप्तिग्रहणाऽभावमुपपादयति । अप्रत्यक्षत्वादिति । चशब्देन प्रमाणान्तराद् व्याप्तिग्रहणशङ्कां निरस्यति । मा भूत्तर्हि कर्तृव्यापरावगम इत्यत्राह । अवगम्यतइति । आद्यमनुवदति । अथेति । द्वैधीभावस्य कर्तृव्यापारजन्यतायाः दृष्टत्वात् संविदो ऽपि तज्जन्यत्वमनुमीयते इत्याह । तर्हीति । आत्मनि व्यापाराऽसंभव इत्युक्तमनुवदति । ननु न परिणाम इति । व्यापारमन्तरेण फलोत्पत्तेरनुपलब्धेर्व्यापारो ऽप्येष्टव्य इत्याह । तर्हीति । फलमन्यथासिद्धमिति शङ्कते । ननु मम इति । समवाय्यसमवायिनिमित्तकारणानुरोधात्फलस्योत्पत्तेः संभवान्न कारणान्तरं मृग्यमित्यर्थः । कारणत्रितयात्कार्योत्पत्तेरुपलम्भात् यथा तस्याऽभ्युपगम-
१७५।२ स्तथा व्यापारो ऽप्येष्टव्य इत्याह । न करणेति । कुठारवृक्षसंयोगं विनोद्यमनादिव्यापाराद्दृष्टेरित्यर्थः ।

यत्र यद्दृश्यते तत्र तदेष्टव्यमात्मनि च तद्दर्शनाभावान्न

तद्देष्टव्यमित्यनुमानाच्चतुरचोद्यमुत्थापयति । अत्रेति । अनु-
मानमात्रोच्छित्तिप्रसक्तेर्नैतच्चोद्यं शोभते इत्याह । स चेति । १.७५।६
इष्टसाधनताज्ञानपूर्विका प्रवृत्तिरिति तावत् सर्वजनीनं, न
च तत् त्वन्मते संभवति, ओदनगतेष्टसाधनताया अप्रत्यक्षत्वा-
त् । न चाऽनुमेयत्व,मुक्तन्यायस्य तत्रापि प्रसरात्, ततो जीवनमेव
दुर्लभमापतितमित्यर्थः । स्थायिमते फलस्य कर्तृव्यापारजन्य-
त्वे ऽपि क्षणिकमते कथं तत्कल्पनमित्याशङ्क्य क्षणिकत्वस्य
निरस्तत्वात् व्यापाराऽनुमितिर्युक्तेत्याह । सुगतानामिति ।

क्षपणकमते नित्यचैतन्यं स्वरूपेणाऽवभासकम्, उत आ-
गन्तुकज्ञानद्वारेणेति विकल्प्याद्यं दूषयति । क्षपणकानामिति ।
द्वितीये कर्तृव्यापारसिद्धिरिति अभिप्रायः । लौकायतिकमते
संवेदनस्याऽऽगन्तुकत्वात्तज्जनकव्यापार एष्टव्य इत्याह । लो-
कायतस्येति । दूषणान्तराभिधित्सया पूर्वोक्तमेव चोद्यमुत्था-
पयति । ननु सर्वगतस्येति । सर्वगतत्वान्न परिस्पन्दो निरवयव-
त्वान्न परिणामो ऽपीत्यर्थः । आत्मनः परिस्पन्दो न संभव-
तीत्येतदङ्गीकुर्मः, परिणामाऽनुपपत्तिरिति यदुच्यते तन्न मृ-
ष्यामहे, किं तात्त्विकस्य परिणामस्याऽनुपपत्ति,रुत काल्प-
निकस्य? तत्राद्यमङ्गीकरोति । सत्यमिति । द्वितीयं दूषयति ।
अध्यासेति । अन्तःकरणसंपिण्डित आत्मा संविदाकारेण
परिणमते इत्येवेष्यतां, किं ज्ञानपरिणामेनेति शङ्कायामाह ।
न चेति । 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति श्रुतेः संविदो
नित्यसिद्धत्वमित्यर्थः ।

बोधरूपात्मन एव विषयद्रष्टृत्वात् किं परिणामकल्पनये-
ति शङ्कामुपसंहारव्याजेन निरस्यति । अत इति । विषया- १.७५।१२
वच्छेदो विषयसंबन्धः, तत्रोपाधिः प्रयोजकः । स्वतो ऽस-

ङ्गस्य विषयसंबन्धाऽसंभवात्तद्धेतुभूतं ज्ञानमेष्टव्यमित्यर्थः । प-
१.७५।१२ रिणामतत्प्रतिबिम्बितसंविदोर्ज्ञानपदव्युत्पत्तिं दर्शयति । क-
रणव्युत्पत्त्येति । एवं संविज्ज्ञानभेदे ऽपि परोक्षाऽपरोक्ष-
संविद्भेदः कथं? तस्याः स[illegible] परोक्षत्वात्तदवच्छेदकवृत्तेश्च प-
रोक्षत्वादित्याशङ्क्याह । तत्रेति । अर्थोपाधीति पदच्छेदः ।
अर्थ उपाधिर्ज्जनको यस्य तदर्थोपाधि, इन्द्रियसंयुक्तो ऽर्थः
स्वाकारां वृत्तिं जनयति, तस्यां च वृत्तौ अपरोक्षसंविद् प्र-
तिबिम्बिता भवति, ततश्चाऽपरोक्षसंवित्प्रतिबिम्बाधारतया
ज्ञानस्याप्यपरोक्षत्वम् । यत्र चेन्द्रियसंयुक्तार्थस्य वृत्तिजन-
कत्वाऽभावः तत्र चाऽपरोक्षसंविदो न प्रतिबिम्बभाव इति
ज्ञानस्य पारोक्ष्यमित्यर्थः । अपरोक्षसंविदवच्छेदकत्वमुपपाद-
यितुमर्थोपाधीति विशेषणम् ।

उत्तरभाष्यव्याख्यां विहाय सूत्रस्य शास्त्रान्तर्भावः क-
स्मादुच्यते?इत्याशङ्क्य वृत्ताऽनुवादपूर्वकं तात्पर्यमाह । तत्रेति ।
अतीतग्रन्थे इत्यर्थः । अवयवार्थेति । ज्ञातुमिच्छा जिज्ञासे-
ति जिज्ञासाशब्दस्याऽवयवार्थव्युत्पादनेनेत्यर्थः । इच्छाया
वाक्यार्थत्वे विषयसौन्दर्यलभ्यत्वात् कर्तव्योपदेशाऽनुपप-
१.७५।१५ त्तिः, तथा च साकाङ्क्षत्वेन वैयर्थ्यमित्याशङ्क्याह । इष्य-
माणेति । अन्तर्णीतमित्यस्यायमर्थः । इष्यमाणज्ञानं प्रति
साक्षादिच्छायाः साधनत्वाऽसंभवादिच्छाऽनन्तरभावी ज्ञा-
नात्प्राक्कालसंबन्धी विचारो लक्ष्यते, तत्र ब्रह्मज्ञानस्याऽन्यत
उत्पत्त्यसंभवाद्वेदान्तेभ्य एवोत्पत्तिर्वक्तव्या, न चाऽनिर्णीत-
शक्तितात्पर्याणां वेदान्तानाम् अप्रतिबन्धाऽपरोक्षप्रत्यय-
जनकत्वमिति शक्तितात्पर्यविचारः कर्तव्यो मुमुक्षुणेत्या-
शङ्कान्तरसद्भावे तन्निराकरणं स्यात्, तदेव कथं?मिति श-

ङ्कते । कथमिति । शङ्कामाह । नास्येति ।

किमेतत्सूत्रं शास्त्रान्तर्भूतम्, उत नेति विकल्प्याद्यमुत्था-
पयति । अस्येति । तत्रापि किमेतत्सूत्रारम्भ एतत्प्रयुक्त, आहो १७५।१८
स्विदन्यप्रयुक्त? इति विकल्पयति । विचारेति । विचारार-
म्भकर्तव्यताया विचारो निरूपणं यस्मिन् सूत्रे तत्तथोक्तं,
तस्य प्रथमसूत्रस्येत्यर्थः । आद्यमुत्थाप्य दूषयति । स्वेनेति ।
स्वस्यारम्भासिद्धेस्तस्य प्रयोजकत्वमित्यात्माश्रयता । द्वितीयं
दूषयति । सूत्रान्तरेणेति । आद्यसूत्रारम्भस्य सूत्रान्तरप्रयोज्य-
त्वे तदारम्भस्यापि सूत्रान्तरप्रयोज्यत्वं, तस्यान्यप्रयोज्यत्वमि-
त्यनवस्थेत्यर्थः । द्वितीयमनुवदति । अथेति । वाक्यार्थनिर्णया-
ऽपेक्षितन्यायकलापप्रतिपादकशास्त्रबाह्यत्वादाद्यसूत्रं मुमुक्षुणा
नारभ्यमित्याह । तर्हीति ।

अन्तर्भावपक्षस्यापि दुष्टत्वात्कथमुपादेयत्वं? तत्राह । आ-
पातेति । साङ्गाध्ययनविधिमपेक्ष्य श्रोतव्य इति विधिं प्रति-
पद्यतइति, विधिश्चाऽनुबन्धत्रयमन्तरेणाऽसंभाव्यमानो ऽनुब-
न्धत्रयाऽपेक्षितन्यायप्रतिपादकं सूत्रमारम्भयतीत्यर्थः । अध्य-
यनविधिमपेक्ष्य श्रोतव्य इत्यादिविधिरुत्तरविधिशब्दार्थः । त-
त्राप्यस्य प्रथमारम्भः कस्मादित्यत्राह । विधाविति । वि-
धेर्विषयो विधिविषयः, स च विचारश्चेति विधिविषयवि-
चारः, तद्विषयसूत्राणीत्यर्थः । तथापि कथं समन्वयसङ्गति?-
रित्याशङ्क्याह । श्रोतव्येति । श्रोतव्यो जिज्ञासितव्य इ- १७६।१
त्यादिवाक्यानां विचारविधौ समन्वयं तावदिदं सूत्रं प्रति-
पादयति, अर्थाच्च विचारकर्तव्यतायां सिद्धायां वेदा-
न्तानामपि ब्रह्मणि समन्वयनिमित्ततां भजतइति समन्व-
यसंबन्ध इत्यर्थः ।

सूत्रे ऽनुबन्धत्रयाऽप्रतिपत्तेः कथमस्य तत्प्रतिपादकत्व?-
१,७८।३ मिति पृच्छति। अत्रेति। अत्र सूत्रे। श्रुत्या मुख्यवृत्त्येत्यर्थः। अप्रतिपत्तिरसिद्धेत्याह। तदाहेति। प्रयोज्यो निष्पाद्य इति। मोक्षशङ्कां निरस्यति। प्रयोज्य इति। तथा चोक्तं "नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते" इति। एकस्या इत्यत्र किं जिज्ञासा निर्दिश्यते, उत मुमुक्षा? आद्ये तस्या जिज्ञासाहेतुत्वाऽभिधानाऽयोगः। न द्वितीयः। पूर्वत्र साधनचतुष्टयस्य हेतुत्वमुक्तम्, अत्र चैकस्य हेतुत्वमुच्यतइति विरोधप्रसङ्गात्। तत्राह। एकस्या इति। मुमुक्षाशब्दस्य विशेषणत्रयोपलक्षणत्वान्न विरोध इत्यर्थः। नन्वर्थादुपात्तं हेतुत्वमिति कथमुक्त?मथशब्देन तस्योपादानादित्याशङ्क्याह। अर्थादिति। आनन्तर्यमथशब्दस्याभिधेयार्थः, तद्बलाद्धेतुत्वप्रतिपत्तेरित्यर्थः। नन्वतःशब्देन हेत्वभिधायिनोपात्तमिति शङ्कां निरस्यति। अतःशब्दस्येति।

जिज्ञासायाः कर्तव्यत्वं श्रुत्यभिहितमिति कथमुक्तं? तद्वाचकपदाऽभावादित्याशङ्क्याह। अनुवाद इति। विचारकर्तव्यताया असूत्रार्थत्वं शङ्कते। नन्विति। 'अनधिगते शास्त्रमर्थवद्'दिति न्यायविरोधान्नैवमिति दूषयति। नेत्याहेति। ज्ञानकर्तव्यताया अधिगतत्वं कुतो? ऽत्राह। इष्यमाणस्येति। ज्ञानस्याऽसाध्यत्वे सन्वाच्याया इच्छायाः कर्तव्यत्वं प्राप्तमिति शङ्कते। किं तर्हीति। इच्छाया अपि स्वतः सिद्धत्वात् तत्र कर्तव्यतोपदेशाऽनुपपत्तेः उपायं लक्षयित्वा तस्य कर्तव्य-
१,७६।११ त्वमुच्यतइत्याह। तदाहेति।

ननु नियोगस्य प्रवर्तकत्वात्स कथनीय इति वक्तव्यं, किमुपायः कथनीय इत्युच्यत?इत्याशङ्क्य प्रवर्तकत्वमपीष्टसाधन-

स्येत्यभिप्रायेणाह । अनवगतेति । विचारस्य ज्ञानोपायताया १७६।११
अन्वयव्यतिरेकसिद्धत्वात्तत्र विधिरनर्थक इत्याशङ्क्याह । दृ-
ष्टेति । यथा 'व्रीहीनवहन्या'दित्यत्र दृष्टार्थोऽप्यवहनने विधि-
राश्रीयते नियमाऽदृष्टसंभवात्तद्वदत्रापि । न च तत्र नियमा-
ऽदृष्टसाध्यप्रधानाऽपूर्वसंभवाद्विधेरर्थवत्त्वम्, अत्र त्वदृष्टसाध्यं
नेत्यपि शङ्कनीयम् । आत्मसाक्षात्कारस्याऽदृष्टसाध्यत्वादित्य-
र्थः । तस्माद् ब्रह्म-जिज्ञासितव्यमित्यादिभाष्यमाक्षिपति । ननु
पदार्थेति । प्रयोजनविशेषसंभवात् सो ऽपि कथनीय इत्याह ।
सत्यमिति । वाक्यार्थकथनभाष्ये संबन्धाद्यप्रतिपत्तेरनर्थक-
मेतदित्याशङ्कते । मुमुक्षुणेति । उत्तरो ग्रन्थः स्पष्टार्थः । अ- १७६।१५
त्रेदं विवक्षितं, ब्रह्मज्ञानाय विचारः कर्तव्य इत्युक्ते अनधि-
गतस्य ब्रह्मणः प्रमेयत्वं तस्यैव प्रमितस्य प्रयोजनत्वं शक्य-
प्रतिपाद्यतया संबन्धो ज्ञानकामस्याऽधिकारित्वं चेति अनु-
बन्धचतुष्टयं लभ्यते, तस्मादनुबन्धचतुष्टयसंभवाद् विचारः क-
र्तव्य इति ॥

इति श्रीपरमहंसपरिव्राजकाचार्याऽखण्डाऽनुभूतिपू-
ज्यपादशिष्येणाऽखण्डानन्दमुनिना विरचिते
विवरणतत्त्वदीपने तृतीयं वर्णकं
समाप्तम् ।



## अथ चतुर्थवर्णकम् ।

### श्रीगणेशाय नमः ।

अनुबन्धचतुष्टयं विचारप्रयोजकं, तच्च ऽसिद्धमिति उत्तर-ग्रन्थवैयर्थ्यमिति चेत्, मैवं, विधान्तरेण तदसंभवोस्थितेः । तथा हि । वेदान्तशास्त्रं विषयः, तत्किम् आरभ्य,मुत नाऽऽर-भ्य?मिति विषयप्रयोजनसंभवाऽसंभवाभ्यां संदिह्यते । तत्रा-ऽसंभावितविषयप्रयोजनत्वादनारभ्यमिति तावत्प्राप्तमिति । न च हेत्वसिद्धिः, ब्रह्मप्रसिद्ध्यप्रसिद्ध्योर्विषयादेरनिरूपणादि-
१७७।१ त्यभिप्रेत्याह । तत्पुनरिति । प्रसिद्ध्यप्रसिद्ध्योर्विषयाद्यसं-भवस्योक्तत्वात्कथमिति प्रश्नाऽनुपपत्तिरित्याशङ्क्य तात्पर्यमाह । ननु विधीति । विचारविधिर्विधिशब्दार्थः । विषयादेरसंभ-वात् श्रवणविधे'र्विष्णुरुपांशु यष्टव्य' इत्यादिवदन्यार्थत्वमु-पेयमित्यभिप्रायेणाह । परिहरतीति ।

प्रतिपन्नस्यापि विषयत्वे को दोष? इति शङ्कते । ननु प्र-तिपन्नमिति । अधिगते ऽप्यधिगत्यन्तरसंभवात्प्रतिपन्ने तस्मि-न्निति न युक्तमित्याशङ्क्याह । अनधिगतेति । प्रसिद्धपक्षे प्र-योजनाऽऽक्षेपो न युक्तः, ज्ञानप्रयोजनसंभवादित्याशङ्क्य ज्ञा-नस्य स्वरूपेणाऽपुरुषार्थत्वादविद्यानिवर्तनेन पुरुषार्थत्वं व-क्तव्यम्, अविद्यानिवृत्तेश्च प्रमाणान्तरेण सिद्धत्वात्प्रयोजना-
१७७।५ क्षेपो युक्त इत्याह । विषयेति । टीकायामनेनानवगमादित्य-त्राऽवधारणं विवक्षितमिति द्रष्टव्यम् । नास्य ब्रह्माऽवगतिः

प्रयोजनमित्यत्र फलपर्यन्तेति शेषः । अप्रसिद्धे ऽनधिगतार्थ-
त्वसंभवान्न शक्यं जिज्ञासितुमिति कथमुक्तमित्याशङ्क्या-
ऽस्मिन् पक्षे न विषयाक्षेप इति भाष्यटीकयोस्तात्पर्यमाह ।
अथेति । अनधिगतार्थगन्तृषु चक्षुरादिष्वर्थसंबन्धप्रयोजने दृ- १.७७।९
श्येते, ततः कथमाक्षेप? इति शङ्कते । नन्वनधिगतेति ।

चक्षुरादिवत्प्रतिपादकत्वस्योक्तत्वाद्यन्न कदा चिदित्या-
देः परिहाराऽऽभासत्वमाशङ्क्याह । परिहरतीति । यन्न कदा
चिदित्यस्यायमर्थः । यत्कथमपि स्वतः परतो वा बुद्धावस-
मारूढविशेषं तत्कदा चिदपि न प्रतिपाद्यते, यत्कदा चिदपि बु
द्धावसमारूढविशेषं तत्कथमप्यनुमानेन युक्त्या वा न प्रतिपाद्ये-
तेति वा संबन्धः । अथ यद्बुद्धौ कदा चिदपि न स्वेनाऽन्यरूपेण
वा वर्तते तदसमारूढविशेषं कथं प्रतिपाद्येतेति । सम्यक्परिहा-
रमेवाह । प्रत्यक्षादीति । अनधिगतस्यैव प्रतिपादने हेतुमाह ।
विचारेति । ततो वैषम्यमाह । यत्रेति । प्रसिद्धपक्षे विषया-
ऽसंभवस्याऽप्रसिद्धपक्षे च संबन्धाऽसंभवस्योक्तत्वात् प्रसिद्धं
पुनरित्यत्रापि तस्यैव निर्देशे पौनरुक्त्यमित्याशङ्क्य टीकाव्या-
वर्त्यां शङ्कामाह । नन्वप्रसिद्धइति । प्रसिद्धत्वपक्षे प्रतिपाद्य-
त्वयोग्यतारूपसंबन्धसंभव इतरत्र च तदभावात्संबन्धाक्षेप इ-
त्याशयेनाह । तत्राहेति ।

प्रतिपत्त्यप्रतिपत्त्योर्विषयादेराक्षेपात् प्रकारान्तरस्या-
ऽसंभवान्नितयं समाधत्तइति कथमुक्तं? तत्राह । अविज्ञात-
इति । कारणोपपत्तित इत्यस्याऽविज्ञानइत्यनेन संबन्धः ।
कारणं चोपपत्तिश्चेति तथोक्ते, ताभ्यामिति विभागः । करण-
शब्देन प्रमाणमुच्यते । विशेषतः प्रतिपन्ने कथं विचारप्रतिप-
त्तिरिति तत्राह । विशेषत इति । सामान्यन्यायं प्रस्तुते प्रसारय- १.७७।१५

ति । ब्रह्मण इति । विधिविषयादेः शास्त्रत एव सिद्धत्वाद्वा-
१७७।१८ ष्यकृतप्रयासो वृथेति शङ्कते । ननु समन्वयेति । स्वाभिलषि-
तोपायज्ञानं विना ग्रन्थविशेषे प्रवृत्त्यनुपपत्तेः तदर्थं विषयादे-
रादौ निर्देश इत्याह । तत्राहेति । प्रयोजनविशेषनिर्देशं वि-
ना प्रवृत्त्यसंभवश्चेत् तर्हि स एव निर्दिश्यतामित्युक्तमेवमपी-
त्यत्र, किमवधारणमयोगं व्यवच्छेदयति, उताऽन्ययोगम्? आद्ये
मदिष्टसिद्धिः । न द्वितीयः । प्रवृत्त्यङ्गत्वेनेतरयोरपि वक्त-
व्यत्वादित्याशङ्क्याह । ननु प्रयोजनेति ।

प्रवृत्त्यव्यभिचारात्तयोरपि प्रवृत्त्यङ्गत्वे ततस्तन्निर्देशो ऽपीति शङ्कते । ननु साधनमिति । शक्यसाध्यमिति प्रतिपादयितुं योग्यतालक्षणसंबन्धमित्यर्थफलाऽभेदात्तयोर्न पृथङ्निर्देश इत्याह । तत्राहेति । फलाऽभेदो ऽसिद्ध इति शङ्कते । नन्विति । तृप्तिसाधने प्रवृत्तिर्दृश्यते न तु तृप्तावित्यर्थः । फलस्यापि विषयत्वं दृष्टमित्याह । तत्राहेति । किं फलस्य विषयत्वव्यपदेशः, उत फलमेव विषयः? आद्यस्त्वङ्गीक्रियते, द्वितीयस्त्वनुपपन्नः, केवलस्य विषयत्वात्, क्रियाजनिताऽतिशयविशिष्टस्य च फलत्वादित्याशङ्क्य तात्पर्यमाह । प्रयोजनेति । क्रियाजनितो ऽतिशयः प्रयोजनं तच्छालिनो विषयत्वमित्यर्थः । ततः किमित्यत आह । ततश्चेति । यद्यपि क्रियाजनिताऽतिशयशालितया प्रयोजनत्वं जायमानातिशयविशिष्टतया विषयत्वमिति भेदः, तथापि फले ज्ञाते विषयोपि ज्ञातो भवेदिति न पृथङ्निर्देशाऽपेक्षेत्यर्थः ।

विषयफलयोरत्यन्तभेदो ऽपि दृश्यतइति शङ्कते । ननु
कुलालेति । अत्यन्तभेदे उपादानोपादेयभावस्याऽनुपपत्तेः स
१७८।२ नेष्टव्य इत्याह । तत्राहेति । विषयसंबन्धयोः प्रयोजनान्तर्ग-

तत्वान्न पृथङ्निर्देश इति शङ्कायां सत्यमिति तदङ्गीकारो न युक्तः, पृथङ्निर्देशस्य साध्यमानत्वादित्याशङ्क्य तात्पर्यमाह । सत्यमिति । अङ्गीकृतमेवांशमाह । प्रयोजनेति । द्विविधं विष- १७८।२
यत्वं, क्रियाफलशालित्वम् अनन्यसाधारणत्वं चेति । तत्राद्यः प्रयोजनप्रतिपत्तौ प्रतिपन्नो भवतीत्यर्थः । कथं तर्हि विवाद? इति शङ्कते । किं त्विति । अनन्यसाधारणतालक्षणस्य विषयस्य प्रयोजनानन्तर्भावात् पृथग्वक्तव्यत्वमित्याह । प्रयोजनमिति । ब्रह्मणोऽनन्यसाधारणतया शक्यप्रतिपाद्यतया च प्रयोजनं, प्रकरणस्य पुरुषव्यापारविषयस्य श्रवणादेर्विषयभावे दर्शिते साधने नियमेन प्रवृत्तिर्भवतीति योजना । व्यापारविषयस्येति षष्ठी कर्मणि द्रष्टव्या ।

ब्रह्मणोऽनन्यसाधारणतारूपं विषयत्वं विचिकित्साद्दृष्टान्तेन समर्प्यतइति तस्याऽसंगतिमाशङ्क्य तात्पर्यमाह । तत्र प्रवृत्तीति । अनुभूयमानतया विचारतज्जन्यज्ञानयोः प्रयोजनमपि ब्रह्मविषयतया पृथग् वक्तव्यमिति दर्शयितुं दृष्टान्तमाहेति संबन्धः । विषयतयैवैतद्विवृणोति । अनन्यसाधारणतयेति । कथं तस्याऽनन्यसाधारणता? सर्वप्रत्ययवेद्यत्वाभ्युपगमादिति शङ्कां व्यावर्त्तयति । स्वरूपेणेति । सदाकारेण सर्वप्रत्ययवेद्यत्वेऽप्यद्वैतानन्दाद्याकारस्य मानान्तराऽगोचरत्वादनन्यसाधारणत्वमित्यर्थः । विषयस्य पृथग्वक्तव्यत्वे हेतुमाह । तत्र प्रवृत्तीति । विचारनियतप्रवृत्तिसिद्धये इत्यर्थः । अनुभूयमानतयेति । विचारतज्जन्यज्ञानसाध्याऽनुभवफलाश्रयतयेत्यर्थः ।

विपक्षइति । अनन्यसाधारणविषयाऽप्रतिपत्तौ साधनप्र- १७९।८
वृत्तिनियमाऽभाव इत्यर्थः । दृष्टान्तस्याऽयमर्थः । चिकित्सा-

ज्ञानउद्देश्ये चरकसुश्रुताऽऽत्रेयप्रभृतीनि बहूनि साधनानि विद्यन्ते, तेषां मध्ये एकत्रैव नाऽवश्यं प्रवृत्तिः, सर्वेषां साधनत्वाऽविशेषात्। तत्रैव लौकिकं दृष्टान्तमाह। यथेति। दलनं नाम प्रस्थपृष्ठादिना विदारणम्। दार्ष्टान्तिकमाह। तथेति। उक्ते ऽर्थे ऽन्वयमाह। यथेति। निवातकवचवधादेरर्जुनेनैव साध्यत्वादनन्यसाधारणत्वमित्यर्थः। तस्मात् साधनविशेषप्रवृत्तिनियमाय साधानान्तराऽस्पृष्टत्वं वक्तव्यमित्युपसंहरति। तेनेति। विषयनिर्देशमङ्गीकृत्य संबन्धमाक्षिपति। विषयस्येति। अनन्यप्रतिपाद्यत्वे सत्येतत्प्रतिपाद्यो विषयस्तथा च संबन्धो न पृथङ्निर्देष्टव्य इत्यर्थः। संबन्धरूपत्वमसिद्धमित्याह। तत्राहेति। कथमसिद्धिरिति वीक्षायामाह। तत्रेति। संबन्धस्याऽनन्यप्रतिपाद्यत्वादन्यत्वात्मो ऽपि वक्तव्य इति संबन्धः। अन्यत्वं दर्शयितुमनन्यप्रतिपाद्यत्वमेव विशिनष्टि। साधनान्तरेति। संबन्धाऽभावे प्रवृत्तिनियमाऽभाव इत्यत्र दृष्टान्तप्रदर्शनपर उत्तरग्रन्थ इत्याह। इति दर्शयितुमिति।

१७८।८

साधुशब्दपरिज्ञानस्य व्याकरणसंबन्धत्वं विषयत्वं च, ततः कथं व्यतिरेकदृष्टान्त इत्युक्तमित्याशङ्क्याह। अयमर्थ इति। तदर्थी न क चिदपि प्रवर्तते इत्ययुक्तं, व्याकरणे प्रवृत्तिसंभवात्तत्राह। अत इति। प्रयोजनज्ञानमेव विषयादिज्ञानमित्यसंभवे ऽपि तदविनाभावादितरसिद्धिरिति शङ्कते। नन्वेवमपीति। अर्थसिद्धत्वमसिद्धमित्याह। नेत्याहेति। भिद्यत इति कथमुक्तं? तेनापि तथा ऽभ्युपगमादित्याशङ्क्याह। भिद्यतइति। तत्र हेतुमाह। न चाऽन्यतमेनेति। चशब्दो ऽवधारणार्थः सिद्धिपदेन संबध्यते। उक्तमर्थमनङ्गीकृत्य प्रवृत्त्यङ्गत्वमाक्षिपति। ननु स्वरूपेति। प्रमाणाऽभावादिति द्रष्टव्यम्।

१७८।१८

प्रमाणाऽभावो ऽसिद्ध इत्याह । तत्रेति । ब्रह्मणः सामान्यतः प्रसिद्ध्यादेरसंभवान्न विषयादि निर्देष्टव्यमित्युक्तमनुवदति । ननु वक्तव्यमिति । एकान्ततः प्रसिद्ध्यप्रसिद्ध्योः प्रतिपत्त्य- १.७८।२२
नुपपत्त्या प्रसिद्धतामात्रं सिध्यति कथं विषयादि?रित्याशङ्क्याह । तत्र प्रसिद्धेति ।

न केवलं विप्रतिपत्त्यनुपपत्त्या ब्रह्मसिद्धिः, अपि तु ब्रह्मशब्दव्युत्पत्त्या ऽपीत्याह । विप्रतिपत्तीति । ब्रह्मणः शास्त्रविषयत्वं कथं प्रतिषिध्यते? वेदान्तानामेव शास्त्रत्वादित्याशङ्क्य शास्त्रशब्देन वाक्यनिर्णयाऽपेक्षितन्यायप्रतिपादको ग्रन्थो निर्दिश्यतइत्यभिप्रायेणाह । नन्वेवमिति । ब्रह्मणः शास्त्राऽविषयत्वं सूत्रपराहतमिति शङ्कते । ननु ब्रह्मेति । प्रतिभासविरोधान्मैवमिति परिहरति । नेत्याहेति । न्यायानां ब्रह्मविषयत्वात् शास्त्रमपि तद्विषयमित्याशङ्क्याह । सूत्रेति । विषयसंबन्धयोरेवाऽऽक्षेपे को हेतु?रिति शङ्कते । ननु संभावनेति । शास्त्रस्य संभावनाविषयत्वात्तज्ज्ञानं प्रयोजनं न मुक्तिरित्यर्थः । संभावनाज्ञानस्य सुखदुःखप्राप्तिनिवृत्त्यन्यतरत्वाभावान्न स्वरूपेण पुमर्थत्वमित्याह । नेत्याहेति । प्रकृष्टा नाडी प्रनाडी इति शङ्कां निरस्यति । परम्परयेति ।

इच्छाऽवाप्तिः शास्त्रप्रयोजनत्वेन निर्दिष्टेति शङ्कां निरस्यति । धर्मार्थाभ्यामिति । आग्नेयादीनामित्यत्र करणेतिकर्तव्ययोरेकविषयत्वमुक्तं, तत्र के ते आग्नेयादयः, कथं वा एकविषयत्वं, प्रकृते वा कथ?मिति वीक्षायां तत्सर्वमाह । ननु करणेति । तत्र प्रथमं करणस्वरूपमाह । तथा हीति । दर्श- १.७९।५
पूर्णमासाभ्यामिति तृतीयाश्रुत्या यागानां समप्राधान्यमुपेयमित्याह । तेषामिति । किं तदितिकर्तव्य?मिति वीक्षायामाह ।

द्विविधानीति ।

१७९।१२ अर्थकर्माणि दर्शयति । फलेति । आराद्दूरे इत्यर्थः । आरादुपकारकत्वं दर्शयति । फलेति । संस्कारकर्मस्वरूपमाह । प्रोक्षणादीनीति । सन्निपत्योपकारकत्वमाह । प्रोक्षणादीनीति । सन्निपत्योपकारकत्वमाह । द्रव्येति । करणेतिकर्त्तव्ययोः स्वरूपमभिधाय तयोरेव विषयत्वमाह । तत्रेति । अङ्गेषु पृथक्फलाऽश्रवणात् यत्र च फलं श्रूयते तस्याऽर्थवादत्वात् करणफलमेव फलमित्यर्थः । दार्ष्टान्तिकमाह । एवमिति । निर्णीतशक्तितात्पर्यविशिष्टस्य शब्दस्य करणत्वात् शक्तितात्पर्यनिर्णयस्य विचाराऽधीनत्वात् स्वरूपोपकार्यङ्गत्वं, प्रमेयविचारस्य त्वारम्भावगमादिनिवृत्तिरेव फलोपकारत्वमित्यर्थः । विचारस्य प्रतिबन्धनिवर्तकत्वाङ्गीकरणाद् ब्रह्मविषयत्वाऽभिधानं सिद्धान्तविरुद्धमित्याशङ्क्याह । अपसिद्धान्तीति । एकदेशीय इत्यर्थः । वेदान्ताः किं ब्रह्म बोधयितुमीशते, उत नेति विकल्प्यान्त्ये विचारस्याप्यनपेक्ष्यत्वमित्यभिप्रेत्याऽऽद्यं दूषयति । न तु वेदान्ता इति । समर्थस्याप्यन्यापेक्षा दृष्टेत्याह । तत्रेति ।

प्रकारान्तरेण ब्रह्मविषयत्वमाक्षिपति । ननु कथमिति । अन्यविषयस्याप्यन्यविषयत्वं दृष्टं, ततो न विरोध? इत्याह । तत्राहेति । उद्यमनादिव्यापारस्य वृक्षेऽतिशयजनकत्वात्कथं परशुविषयत्व?मित्याशङ्क्याह । द्विविधमिति । द्वैविध्यमेवाह । किंचिदिति । कर्तृव्यापारस्येत्यस्योद्यमननिपतनव्यापारस्येत्यनेन संबन्धः । उद्देश्यं फलं यस्य स उद्देश्यफलः, तस्य भावस्तत्ता तयेत्यर्थः । उद्यमनादेः करणव्यापारस्य च वृक्षविषयत्वमिति वीक्षायामाह । तत्रेति । कुठारव्यापारस्यापि व्य-
१८०।१२

वधानेन वृक्षविषयत्वम्, अन्यथेतरत्रापि व्यवधानं न स्यादि-
त्याशङ्क्य व्यवधानाऽनुभवान्मैवमित्याह । स एवेति । कु- १८०।४
ठारकर्तृव्यापारस्य वृक्षविषयत्वमुक्तं, तदनुचितमिति चो-
दयति । नन्विति । करणत्वकर्तृत्वयोरेकत्र व्याघा-
तादित्यर्थः । विकल्पाऽसहत्वान्नैतच्चोद्यमित्याह । उच्यते
इति । किमेकविषययोर्विरोधः, उत भिन्नविषययोः? तत्राद्ये
ऽभ्युपगमः, द्वितीयस्त्वनुपपन्न इत्याह । सर्वाणीति । कर-
णस्यापि कारकत्वात् क्रियाकारिणश्च कारणस्य स्वव्या-
पारं प्रति कर्तृत्वमित्यर्थः ।

करणस्य स्वव्यापारकर्तृत्वे ऽपि न वृक्षविषयत्वं, द्वैधी-
भावाऽतिरिक्तफलस्याऽनिरूपणात्, द्वैधीभावस्य चाऽन्यफल-
त्वादिति शङ्कायामाह । सर्वेति । कर्मतयेति । उद्देश्यतयेत्यर्थः ।
करणस्यापि कर्तृत्वे कर्त्ता करणं चेति भेदव्यपदेशो निर्वि-
षयः स्यादित्याशङ्क्याह । तत्र कर्त्तेति । भेदमेवाह । तत्र क-
र्त्तेति । तत्र तेषां कर्त्रादीनां मध्ये स्वतन्त्रव्यापारः कर्त्तेति
संबन्धः । स्वतन्त्रव्यापारत्वमेवाह । साधननियोगेनेति । सा-
धारणप्रेरणेनेत्यर्थः । लक्षणान्तरमाह । धातुनेति । गच्छति
पचतीत्यादौ धातुना प्राधान्येन विशेष्यो वाच्यो व्यापारो
यस्य स तथोक्तः । धातुशब्देन तदर्थो विवक्षितः । कारण-
स्वरूपमाह । करणमिति । उपकारकं करणमित्युक्ते कर्त्रा-
दिषु प्रसक्तिस्तदर्थं संनिपत्येति । करणसन्निपातिषु व्यभिचारं
व्यावर्तयितुमाह । फलमिति । कर्म लक्षयति । फलसमवा- १८०।६
यीति । अत्र च परसवेतक्रियाफलसमवायीति द्रष्टव्यम् । इत-
रथा गमनक्रियाफलशालिनि कर्तरि व्यभिचारः स्यादित्यर्थः।

धातुना विशेष्यव्यापारस्य कर्तृत्वे काष्ठादीनामपि ता-

७०

